बाणाधीना क्षत्रियाणां समृद्धिः पुत्रापेक्षी वञ्च्यते सन्निधाता ।
विप्रोत्सङ्गे वित्तमावर्ज्य सर्वं राज्ञा देयं चापमात्रं सुतेभ्यः ॥ २४ ॥

**शकुनिः** — सम्यगाह गङ्गोपस्पर्शनाद् धौतकल्मषाङ्गोऽङ्गराजः ।

**कर्णः** —

इक्ष्वाकुशर्य्यातिययातिराममान्धातृनाभागनृगाम्बरीषाः ।
एते सकोशाः पुरुषाः सराष्ट्रा नष्टाः शरीरैः क्रतुभिर्धरन्ते ॥ २५ ॥

**सर्वे** — गान्धारीमातः! यज्ञसमाप्त्या दिष्ट्या भवान् वर्धते ।

---

बोद्धव्यम् । न्यायेन नीत्या । अतिसृजता सत्कर्मणि निश्शेषं विनियोजयता । न्याय्यमेव न्यायानपेतमेव । न्यायश्च वक्ष्यमाणश्लोके स्पष्टः ।

**बाणे**ति । क्षत्रियाणां, क्षत्रियसामान्यस्य । समृद्धिः धनसम्पत् । बाणाधीना बाणव्यापारायत्ता युद्धार्जनीया, न तु पितृसकाशाद् दायत्वेन प्राप्येत्यर्थः । पुत्रापेक्षी पुत्रापेक्षणशीलः पुत्र एव मदीयां समृद्धिं सर्वामुपभुङ्क्तामित्यभिलाषवानित्यर्थः । अत एव संनिधाता व्ययं विना धनस्य सम्यक् स्थापयिता क्षत्रियः। तन्निधातेति वा पाठः । तस्याः समृद्धेर्निधातेति तदार्थः । वञ्च्यते स्वार्जितायाः समृद्धेः सत्कर्मसु अविनियोगादकृतार्थः क्रियते, अर्थात् पुत्रस्नेहेन । अतः समृद्धिमता राज्ञा यत् कर्तव्यं, तदाह—राज्ञा, सर्वं, वित्तं धनं । विप्रोत्सङ्गे ब्राह्मणस्योत्सङ्गे । आवर्ज्य समर्प्य । सुतेभ्यः पुत्रेभ्यः । चापमात्रं चाप एव चापमात्रं, मयूरव्यंसकादित्वात् समासः । देयं दातुम् अर्हम् । यत एष राज्ञामाचारसामान्यन्यायः, अतो भवदाचरितं न्याय्यमेवेति पूर्ववाक्यार्थसमर्थना द्रष्टव्या ॥ २४ ॥

**सम्यगि**त्यादि । सम्यग् आह विशुद्धं वक्ति । युज्यते हि कायविशुद्धस्य वाग्विशुद्धत्वमिति भावः । गङ्गोपस्पर्शनाद् गङ्गाजलाचमनाद् अवभृथस्नानप्रसङ्गकृतात् । अङ्गराजः दुर्योधनदत्ताङ्गदेशाधिपः ॥

धर्मोत्साहोद्दीपिसदृशमाह—**इक्ष्वाकि**त्यादि । इक्ष्वाकुप्रभृतयः अष्टौ । एते प्रसिद्धाः । सकोशाः सधनाः । पुरुषा इत्यस्य स्थाने 'सपुरा' इति ग्रन्थान्तरे पाठः । सराष्ट्राः राष्ट्रं ग्रामसमूहः तत्सहिताः । शरीरैः देहैः । नष्टाः, क्रतुभिः यज्ञैः लक्षणया यज्ञजन्यैर्यशोभिः इतिहासश्लाघितैः । धरन्ते ध्रियन्ते जीवन्तीत्यर्थः । स्थितिवृत्तिरिह धातुः ॥ २५ ॥

**गान्धारी**त्यादि । **दिष्ट्ये**ति **हर्षे** । वर्धते अभ्युदयं **प्राप्नो**ति ॥

**दुर्योधनः** — अनुगृहीतोऽस्मि । भो आचार्य ! अभिवादये ।

**द्रोणः** — एह्येहि पुत्र ! । अयमक्रमः ।

**दुर्योधनः** — अथ कः क्रमः ।

**द्रोणः** — किं न पश्यति भवान् ।

दैवतं मानुषीभूतमेष तावन्नमस्यताम् ।
अहं नाचरणं मन्ये भीष्ममुत्क्रम्य वन्दितुम् ॥ २६ ॥

---

दिष्टिवृद्धिकरणरूपं सर्वकृतं सत्कारं प्रतिपूजयति—**अन्वि**त्यादि । इह भवन्तमिति शेषः ॥

**एही**त्यादि । पुत्रेति वत्सलामन्त्रणम् । एह्येहि मदन्तिकमागच्छागच्छ मदुपदेशं श्रोतुं, मा तावन्मामभिवादयस्वेत्यर्थः । द्विरुक्तिरादरार्था । अयमक्रम इत्युपदेशः । अक्रमः अनुचिताचारः । आदौ मदभिवादनाध्यवसायस्तवायं न न्याय्य इत्यर्थः ॥

उचिताचारं पृच्छति—**अथे**त्यादि ।

**किमिति** । भवान्, न पश्यति किं न जानाति किम् । अर्थादभिवादविषयं क्रमम् ।

तमुपदिशति—**दैवतमि**ति । मानुषीभूतं मनुष्यभावापन्नं । दैवतं द्युनामकवस्ववतारत्वात् । तच्च भारते आदिपर्वणि (१०६ अध्याये) स्पष्टम् । एषः भीष्मः समीपतरवर्तिनो भीष्मस्याङ्गुल्या निर्देशोऽयम् । तावद् आदौ । नमस्यताम् अभिवाद्यतामिति विधिः । पश्चात्तु मत्प्रभृतिरित्यार्थम् । अहं, भीष्मम्, उत्क्रम्य उल्लङ्घ्य । वन्दितुं वन्दनार्थं वन्दनानुकूलमित्यर्थः । वन्दतेः क्रियार्थक्रियोपपदकात् तुमुन् । आचरणं त्वच्चेष्टितं । न मन्ये नेच्छामि नानुजानामि वा । अथवा 'वन्दितुम् आचरणं न मन्ये' इत्यस्य वन्दनं शिष्टाचारतया नेच्छामीत्यर्थः, वन्दितुं न्यायं न जानामीत्यर्थो वा । केवले धात्वर्थे तुमुन् । अत्र दैवतमिति भीष्मविशेषणपदार्थस्य प्रथमपूजनीयत्वसमर्थकत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणात् । नमस्यतामिति नमश्शब्दाद् 'नमोवरिवश्चित्रङः—' (३-१-१९) इति क्यचि ततः कर्मणि लोट् ॥ २६ ॥

**भीष्मः**—मा मा भवानेवम् । बहुभिः कारणैरपकृष्टोऽहं भवतः । कुतः,

अहं हि मात्रा जनितो भवान् स्वयं ममायुधं वृत्तिरपह्नवस्तव ।
द्विजो भवान् क्षत्रियवंशजा वयं गुरुर्भवान् शिष्यमहत्तरा वयम् ॥ २७ ॥

**द्रोणः**—नोत्सहन्ते महात्मानो ह्यात्मानमपस्तोतुम् । एहि पुत्र ! अभिवादयस्व माम् ।

**दुर्योधनः**—आचार्य ! अभिवादये ।

**द्रोणः**—एह्येहि पुत्र ! एवमेवावभृथस्नानेषु खेदमवाप्नुहि ।

**दुर्योधनः**—अनुगृहीतोऽस्मि । पितामह ! अभिवादये ।

---

**मा मे**त्यादि । वदत्विति शेषः ।

**अहं ही**ति । अहं हि हिशब्दः प्रसिद्धौ । मात्रा जनितः योनिजः । भवान् स्वयं जनितः अयोनिज इत्यर्थः । आयुधं लक्षणया तद्व्यापारः शत्रुहिंसनं । मम वृत्तिः सहजा जीविका । अपह्नवः स्नेहः यद्भावितचित्तस्य रागद्वेषौ न स्तः सा भूतमैत्रीत्यर्थः । तव वृत्तिः । भवान्, द्विजः ब्राह्मणो जात्या । वयम् अहं । क्षत्रियवंशजाः । भवान् गुरुः "सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः" इति पाद्मवचनात् सर्ववर्णगुरुः । अथवा धर्मे धनुषि च शिक्षक आचार्यः । वयं शिष्यमहत्तराः तव शिष्येषु महत्सु महत्तराः सातिशयमहत्त्ववन्तः । एवञ्च स्फुट आवयोर्मिथो व्यतिरेक इति भावः । 'अपह्नवौ ह्नुतिस्नेहौ' इति वैजयन्ती । वयमित्यत्र 'अस्मदो द्वयोश्च' (१-२-५९) इत्येकत्वे बहुवचनम् ॥ २७ ॥

**नोत्सहन्त** इति । महात्मानो हि महामनस्का नाम । हिः प्रसिद्धौ । आत्मानम्, अपस्तोतुम् अपश्लाघितुम् अपकृष्टमाख्यातुमित्यर्थः । नोत्सहन्ते अत्र काक्वा उत्सहन्त एवेत्यर्थः । भूयः स्वगुणविशेषान् बोध्यमानोऽपि भीष्मः आत्मनोऽपकर्षमेव कथयिष्यति, न चाङ्गीकरिष्यति पूर्वाभिवादनयोग्यतामित्यभिप्रायः । अत एव स्वाभिवादनमनुजानाति—**एही**त्यादि ॥

**आचार्ये**त्यादि ।

**एह्येही**त्यादि । भूयो भूयः क्रतूनाहरेति आशीर्वादस्यार्थः ॥

**अनुगृहीत** इत्यादि ॥

**भीष्मः**—एह्येहि पौत्र! एवमेव ते बुद्धिप्रशमनं भवतु ।

**दुर्योधनः**—अनुगृहीतोऽस्मि । मातुल! अभिवादये ।

**शकुनिः**—वत्स!

एवमेव क्रतून् सर्वान् समानीयाप्तदक्षिणान् ।
राजसूये नृपाञ्जित्वा जरासन्ध इवानय ॥ २८ ॥

**द्रोणः**—अहो! आशीर्वचनेऽपि शकुनिरुद्योगं जनयति । अहो प्रियविरोधः खल्वयं क्षत्रियकुमारः ।

**दुर्योधनः**—वयस्य! कर्ण! गुरुजनप्रणामावसाने प्राप्तक्रममुपभुज्यतां वयस्यविस्रम्भः ।

**कर्णः**—गान्धारीमातः!

क्रतुव्रतैस्ते तनु गात्रमेतत् सोढुं बलं शक्ष्यसि पीडयानि ।
अन्तस्त्वनामन्त्र्य न धर्षयामि राजर्षिधीराद् वचनाद् भयं मे ॥ २९ ॥

---

**एह्येहीत्यादि** । बुद्धिप्रशमनं मनसो रागद्वेषकलुषतानिवृत्तिः ॥

अभिवादितः शकुनिराशिषमाशास्ते—**वत्स! एवमित्यादि** । **समानीय** अनुष्ठाय । आप्तदक्षिणान् आप्ता पर्याप्ता दक्षिणा आर्त्विज्यवेतनं येषु तान् । राजसूये सर्वनृपालजयानन्तरनिर्वर्त्ये क्रतुविशेषे । राजसूयवचनं दुर्योधनस्य तदनुष्ठातृयुधिष्ठिरसाम्यसिद्ध्यर्थम् । आनय बन्दीकुरु । जरासन्धसादृश्यवचनं युधिष्ठिरातिशयासिद्ध्यर्थं, युधिष्ठिरेण हि जितेभ्यो राजभ्यः करमात्रं गृहीतं, न तु ते बन्दीकृता इति ॥ २८ ॥

**अहो इत्यादि** । अहो आश्चर्यं, शकुनेर्बुद्धिवाम्यमन्यादृशमित्यर्थः । **उद्योगं** युद्धोद्यमं । **प्रियविरोधः** वैरप्रियः ॥

**वयस्येति** । प्राप्तक्रमं प्राप्तपर्यायं यथा भवति तथा । प्राप्तपर्याय इति वा पाठः । **वयस्यविस्रम्भः** सखिस्नेहः तत्कार्यभूत आलिङ्गनसमुदाचारः ॥

**क्रत्विति** । एतत्, ते, गात्रम् अङ्गं । **क्रतुव्रतैः** यज्ञदीक्षानुष्ठितैरुपवासादिनियमैः । **तनु** कृशम् । अस्ति । पूतत्वमनेन ध्वनितम् । त्वं, बलं, मम शक्तिम् आलिङ्गनकाले मया विनियोक्ष्यमाणामित्यार्थम् । **सोढुं** मर्षयितुं । **शक्ष्यसि**, यद्यर्थे-

**दुर्योधनः**—एवमेव ते बुद्धिरस्तु ।

**द्रोणः**—पुत्र! दुर्योधन! एष महेन्द्रप्रियसखो भीष्मको नाम भवन्तं सभाजयति ।

**दुर्योधनः**—स्वागतमार्याय । अभिवादये ।

**भीष्मः**—पौत्र! दुर्योधन! एष दक्षिणापथपरिघभूतो भूरिश्रवा नाम भवन्तं सभाजयिष्यति ।

**दुर्योधनः**—स्वागतमार्याय ।

**द्रोणः**—पुत्र! दुर्योधन! भवतो यज्ञं सभाजयता वासुभद्रेण प्रेषि-

---

पर्यवसायिनी काक्वुक्तिरियम् । शक्तो भविष्यसि चेदित्यर्थः । पीडयानि गाढमालिङ्गानि अर्थात् त्वद्गात्रम् । एतेन दुर्योधनं प्रत्यतिगाढपरिष्वङ्गाभिलाषस्तदीयापूर्वगुणसम्पद्दर्शनजनितपरितोषातिशयमूलः सूचितः । अत एव परितोषातिशयादाह—अन्तस्तु तव चित्तं तु । अनामन्त्र्य प्रीतिपूर्वमनाभाष्य । न धर्षयामि न पीडयामि । रागद्वेषादिकषायापगमश्लाघ्यायाः साम्प्रतिकस्थितेर्न भेदयामीत्यर्थः । अपूर्वगुणयोगावसरेऽस्मिन् प्रीतिभाषणबहुमाने तव चित्तस्य कर्तव्ये तमकृत्वा तद्विपरीतं भेदनमहं कथं करवाणीत्यभिप्रायः । अधर्षणाध्यवसाये कारणमाह—राजर्षिधीराद् इह वृत्तौ राजर्षिशब्दो राजर्षिवचनमाह । राजर्षिवचनमिव धीरं शान्तप्रगल्भं राजर्षिधीरं तथाभूताद् वचनात् 'कृतश्रद्धो ह्यात्मे'त्यादिरूपात् । मे भयं, जायत इति शेषः । ईदृशवचनसूचितायास्तव विशुद्धायाश्चित्तवृत्तेर्धर्षणं पापाय स्यादिति च भयम् । साम्प्रतिकीं ते चित्तवृत्तिमभेदयन्नभिनन्दाम्येवेति पार्यन्तिकोऽभिप्रायः ॥ २९ ॥

कर्णोक्तिमभिनन्दति—**एवमेवे**त्यादि ॥

**पुत्रे**त्यादि । महेन्द्रप्रियसखः इन्द्रस्य प्रियः सहायः । प्रियश्चासौ सखा च प्रियसख इति 'राजाहःसखिभ्यः—' (५-४-९१)इति टच् समासान्तः । सभाजयति प्रीणाति । 'सभाज प्रीतिसेवनयोः' इति धातुश्चुरादिः ॥

**स्वागतमि**त्यादि । स्वागतं शोभनागमनप्रश्नोपचारः ॥

**पौत्रे**त्यादि । दक्षिणापथपरिघभूतः दक्षिणापथस्य विन्ध्यदक्षिणदेशस्य परिघभूतः अर्गलत्वं प्राप्तः परप्रवेशनिरोधेन पालक इत्यर्थः ॥

**स्वागतमि**त्यादि ॥

**पुत्रे**त्यादि । सभाजयता बहुमन्यमानेन । **वासुभद्रेण**, वासुः श्रीकृष्णः, वा-

तोऽभिमन्युर्भवन्तं सभाजयति ।

**शकुनिः** — वत्स ! दुर्योधन ! एष जरासन्धपुत्रः सहदेवो भवन्तमभिवादयति ।

**दुर्योधनः** — एह्येहि वत्स ! पितृसदृशपराक्रमो भव ।

**सर्वे** — एतत् सर्वराजमण्डलं भवन्तं सभाजयति ।

**दुर्योधनः** — अनुगृहीतोऽस्मि । भोः ! किन्नुखलु समागते सर्वराजमण्डले विराटो नागच्छति ।

**शकुनिः** — प्रेषितोऽस्य मया दूतः । शङ्के पथि वर्तत इति ।

**दुर्योधनः** — भो आचार्य ! धर्मे धनुषि चाचार्य ! प्रतिगृह्यतां दक्षिणा ।

---

सुदेव इति नाम्न एकदेशग्रहणात् । स चासौ भद्रः मङ्गलरूपः वासुभद्रः रामभद्र इतिवत् । अभिमन्युः अर्जुनसूनुः । सभाजयति सेवते ॥

अभिमन्युप्रत्यभिवादनं विस्मारयितुं दुर्योधनस्यावधानमन्यत्र शकुनिराकर्षति—**वत्से**त्यादि । अस्य वाक्यस्य पुरस्ताद् अभिमन्यूद्देश्यकं दुर्योधनवाक्यम् 'एह्येहि वत्स !' इत्येवंरूपं मातृकान्तरे पठ्यते ॥

**एह्येही**त्यादि ॥

**एतदि**त्यादि ॥

अन्वित्यादि । किन्नुखलु नागच्छति केन कारणेन नागत इत्यर्थः । वर्तमानसामीप्यविवक्षया भूते लट् । विराटानागमनकारणजिज्ञासोपन्यासश्चायं तच्छामकत्वेन विराटदूतसंवादस्यौचित्यप्राप्तिमुपरिष्टाद् घटयितुम् ॥

**प्रेषित** इत्यादि । शङ्के सम्भावयामि । वर्तते, अर्थाद् विराटः ॥

क्रत्वनुष्ठानप्रभवे मनःप्रशमे दानोत्साहे च भीष्माद्यभिनन्दनवशाद् दूरमुद्रिक्ते स्वस्य धर्मोपदेशाचार्यम् उचितदक्षिणादानेन पूजयितुमिच्छन्नाह—**भो आचार्ये**त्यादि । धर्मे प्रकृते क्रतौ । धनुषीत्युक्तिरुभयाचार्यत्वेन पूज्यतातिशयप्रतिपादनाय । दक्षिणा प्रकृतयज्ञसंबद्धा । प्रतिगृह्यतां । दक्षिणाद्रव्यस्याकारविशेषमनिर्दिशंस्तन्निर्देशस्य द्रोणायत्तत्वं सूचयति । तेन यस्तवेप्सितोऽर्थः, स दक्षिणात्वेन स्वीक्रियतामित्यभिप्रायः । प्रार्थनायां लोट् ॥

**द्रोणः** — दक्षिणेति । भवतु भवतु । व्यपश्रयिष्ये तावद् भवन्तम् ।

**दुर्योधनः** — कथमाचार्योऽपि व्यपश्रयिष्यते ।

**भीष्मः** — भोः ! किन्नुखलु प्रयोजनं, यदा —

पीतः सोमो बाल्यदत्तो नियोगाच्छत्रच्छाया सेव्यते ख्यातिरस्ति ।
किं तद् द्रव्यं किं फलं को विशेषः क्षत्राचार्यो यत्र विप्रो दरिद्रः ॥ ३० ॥

---

**दक्षिणेती**त्यादि । दक्षिणेति किं ब्रूषे इति शेषः । भवतुभवत्वित्यनास्थावादः । दक्षिणा दूरेऽस्त्विति तदर्थः । भवन्तं, व्यपश्रयिष्ये सेविष्ये प्रार्थयिष्य इति यावत् । अर्थात् कालान्तरे, नेदानीमिति लृट्प्रयोगाद् गम्यते । यद्यपि द्रोणस्य पाण्डवार्धराज्यदापनरूपमीप्सितं हृदि सर्वदा परिवर्तते, तच्च यदृच्छालब्धेऽस्मिन् दुर्योधनप्रतिग्रहप्रार्थनावसरे उपन्यसितुमर्हम् । तथापि तत् सद्यो नोपन्यस्तं द्रोणेन 'दुर्योधनस्तत् साधयिष्यती'ति विश्वासाभावात् । उपजाते तु विश्वासे तत् पश्चादुपन्यसिष्यते । 'व्यपश्रमिष्ये तावद् भवन्तम्' इति ग्रन्थान्तरे पाठोऽस्ति । स त्वपपाठः । 'व्यपश्रमयिष्ये' इति पाठं परिकल्प्य वा व्यपगतश्रमं करिष्यामीत्यर्थवर्णनेन कथञ्चित् समर्थनीयः ॥

**कथमि**त्यादि । व्यपश्रयिष्यते व्यपश्रयणं याचकादेर्दातृप्रभृतीन् प्रति धर्मः । अत आचार्येण 'व्यपश्रयिष्ये' इति मां प्रति न वक्तव्यं, किन्तु आदेक्ष्यामीत्येव वक्तव्यमिति भावः ॥

आत्मसमानकार्यत्वाद् द्रोणस्य हृदयं जानन्नेव भीष्मः कालोचिताचार्यपूजाकरणाभिनिवेशिनो दुर्योधनस्य दक्षिणाप्रतिग्रहप्रार्थनवैफल्योद्भावनं तत्साफल्यसंपादनविषयमुद्यममुद्रेचयिष्यतीति मत्वा तत्प्रार्थनवैफल्यमुद्भावयति—**भोः किन्नुखल्विति** । किन्नुखलु प्रयोजनं न किमपि प्रयोजनम्, अर्थाद् दक्षिणाप्रतिग्रहप्रार्थनस्य ।

कुत इत्याकाङ्क्षायामाह — **यदा, पीतः सोम** इति । यदा यस्मात् कारणादित्यर्थः बाल्यदत्तः बाल्यं तारुण्यं यज्ञश्रमसहं वयः, तेन दत्तः योग्ये वयसि अभिषुत इत्यर्थः । सोमः सोमाख्ययज्ञलतारसः । नियोगाद् विधितः । पीतः । अर्थात् क्षत्राचार्येण । छत्रच्छाया त्वत्साम्राज्यातपत्रच्छाया । सेव्यते अनुभूयते । ख्यातिः कीर्त्तिः । अस्ति । अर्थात् क्षत्राचार्यस्य । एवञ्च धर्मभोगख्यातिभिः सन्तुष्टस्याचार्यस्यार्थित्वमेव न सम्भावितमित्यभिप्रायः । तस्मात् किन्नुखलु प्रयोजनमिति पूर्व-

**दुर्योधनः** — आज्ञापयतु भवान्, किमिच्छति । किमनुतिष्ठामि ।

**द्रोणः** — पुत्र! दुर्योधन! कथयामि ।

**दुर्योधनः** — किमिदानीं भवता विचार्यते ।

प्राणाधिकोऽस्मि भवता च कृतोपदेशः
शूरेषु यामि गणनां कृतसाहसोऽस्मि ।
स्वच्छन्दतो वद किमिच्छसि किं ददानि
हस्ते स्थिता मम गदा भवतश्च सर्वम् ॥ ३१ ॥

---

वाक्येन संबन्धः । अथाचार्यस्यार्थित्वाभावेऽपि अपूर्वसिद्धं किमपि द्रव्यं पुण्यं महिमानं वा तस्मै समर्प्य कृती स्यामिति तव मनोरथः, सोऽपि निष्प्रयोजन एव, द्रव्यादेराचार्ये प्रत्यपूर्वत्वाभावादित्यभिप्रायेणाह — क्षत्राचार्यो विप्रः द्रोणः । यत्र यस्मिन् विषये दरिद्रः, तद् द्रव्यं किं, न किमप्यस्तीत्यर्थः । तत्, फलं पुण्यं भोगो वा । किं, न किमपीत्यर्थः । सः विशेषः गुणातिशयः । कः न कोऽपीत्यर्थः । एवञ्चावाप्तसमस्तेप्सितत्वादयं न कमपि स्वार्थमीप्सितं दक्षिणात्वयोग्यं निर्देष्टुं शक्ष्यतीति व्यर्थ एव ते दक्षिणाप्रतिग्राहणोद्यम इति तात्पर्यम् ॥ ३० ॥

भूयः सनिर्बन्धमाह — **आज्ञापयत्वित्यादि** ॥

इष्टकथनप्रार्थननिर्बन्धिनि दुर्योधने दाक्षिण्यमिव सूचयन्नाह — **पुत्रेत्यादि** । कथयामीति काकूक्तिः । तया कथनस्य साफल्यनैष्फल्यविमर्शसूचनम् ॥

**किमित्यादि** । किं विचार्यते विमृश्यते । इष्टं दुर्योधनो दास्यति न वेति विमर्शो मास्त्वित्यर्थः ।

**प्राणाधिकोऽस्मीत्यादि** । प्राणाधिकः प्राणेभ्योऽप्यधिकः तवातिप्रिय इत्यर्थः । आद्यं विशेषणद्वयमप्रतारकत्वसूचनाय । कृतसाहसःअस्मि कृतमनुष्ठितं साहसं शूरकर्म येन स तथाभूतः भवामि । इदं विशेषणं शूरमध्यगण्यत्वं च गुरु-कार्यनिर्वहणशक्तत्वद्योतनाय । स्वच्छन्दतः विस्रब्धं । किं ददानि मत्स्वामिकेषु द्रव्येषु कतमत् ते प्रयच्छामीत्यर्थः । सर्वस्वेच्छां सम्भावयन्नाह — गदा मम हस्ते स्थिता । आयुधैकवृत्तित्वात् क्षत्रियस्य आयुधमेव केवलं मद्धस्ते यावज्जीवस्थायीत्य-भिप्रायः । सर्वं गदातिरिक्तं मत्सर्वस्वं । भवतश्च भवतस्तु । हस्ते स्थितमिति विपरिणामेन सम्बन्धः । अकृतेऽपि दाने दानानन्तरभाविन्याः स्थितेः स्थितमिति भूतत्वाख्यानं दाने विश्वासजननार्थम् ॥ ३१ ॥

**द्रोणः**—पुत्र! ब्रवीमि खलु तावत्। बाष्पवेगस्तु मां बाधते।

**सर्वे**—कथमाचार्योऽपि बाष्पमुत्सृजति।

**भीष्मः**—पौत्र! दुर्योधन! अफलस्ते परिश्रमः।

**दुर्योधनः**—कोऽत्र।

(प्रविश्य)

**भटः**—जयतु महाराजः।

**दुर्योधनः**—आपस्तावत्।

**भटः**—यदाज्ञापयति महाराजः। (निष्क्रम्य प्रविश्य) जयतु महाराजः। इमा आपः।

**दुर्योधनः**—आनय। (कलशं गृहीत्वा) भो आचार्य! अश्रुपातोच्छिष्टस्य मुखस्य क्रियतां शौचम्।

---

**पुत्रेति**। पुत्र! ब्रवीमि खलु तावत्, इष्टं वदाम्येव वदितुं यत्नं करोम्येवेत्यर्थः। किन्तु बाष्पवेगो बाष्पस्य झटित्युद्गमोन्मुखता। मां बाधते, वदन्तं नानुमन्यते, किं करोमीत्यर्थः। पाण्डवदुःखस्मरणजन्मा चायं बाष्पवेग इति व्यक्तीभविष्यति॥

**कथमित्यादि**। उत्सृजति निर्गमयति। आचार्योऽपीति अपिशब्देन धीरसत्त्वता ध्वन्यते। धीरसत्त्वोऽप्ययं बाष्पं धारयितुं यन्न क्षमते, तदस्य दुःखमतिमहदित्यभिप्रायः॥

आचार्येण ब्रवीमीति वदता स्वहृदये किञ्चिदिष्टमस्तीति दिष्ट्या सूचितम्। तत्तु तन्मुखेन व्याहारयितुमशक्यमस्मिंस्तद् दुःखावसर इत्याशयेनाह—**पौत्रेत्यादि**। परिश्रमः आचार्यमिष्टं व्याहारयितुं त्वया क्रियमाणः प्रयत्नः। अफलः अतिभूमिं गते दुःखे कथमप्ययं न व्याहरिष्यतीत्यर्थः॥

दुःखितं समाश्वास्य व्याहारयिष्यामीति बुद्ध्याह—**कोऽत्रेति**॥

**प्रविश्येत्यादि**। कर्तव्यमाज्ञाप्यतामिति वाक्यशेषः॥

**आप इति**। आपस्तावत्, आनीयन्तामिति योग्यक्रियाध्याहारः॥

**यदित्यादि**। इमा आपः, आनीता इति शेषः॥

**आनयेत्यादि**। आनय जलकलशं मम हस्तेऽर्पयेत्यर्थः। अश्रुपातोच्छिष्टस्य अश्रुपातेन यदुच्छिष्टम् अशुद्धिः तस्येत्यर्थः। अथवा बाष्पासारदूषितस्येत्यर्थः; मुखविशेषणं चेदम्॥

**द्रोणः** —भवतु भवतु । मम कार्यक्रियैव मुखोदकमस्तु ।

**दुर्योधनः** —हा धिक्,

यदि विमृशसि पूर्वजिह्मतां मे यदि च समर्थयसे न दास्यतीति ।
शरशतकठिनं प्रयच्छ हस्तं सलिलमिदं करणं प्रतिग्रहाणाम् ॥ ३२ ॥

**द्रोणः** —हन्त लब्धो मे हृदयविश्वासः । पुत्र! श्रूयतां,

येषां गतिः क्वापि निराश्रयाणां संवत्सरैर्द्वादशभिर्न दृष्टा ।
त्वं पाण्डवानां कुरु संविभागमेषा च भिक्षा मम दक्षिणा च ॥ ३३ ॥

---

**भवत्विति** । भवतुभवत्विति जलशौचेऽनास्थावचनम् । कार्यक्रियैव मदिष्टस्य विवक्षितस्य कार्यस्य संसाधनमेव, न त्विदं कलशजलम् । मुखोदकं मुखशौचार्थं जलम् । अस्तु, कार्यसिद्धिरेव मम दुःखप्रशमनद्वारेण मुखे बाष्पं मार्जिष्यतीत्यभिप्रायः ॥

आचार्यः कार्यक्रियां प्रति मयि अविश्वासादेव स्वहृदयस्थं कार्यं न वक्तीति जानन्नाह—**हेति** । हाधिगिति कष्टोक्तिः । इदानीन्तनं मे चित्तार्जवमाचार्यो न प्रत्येतीत्येतच्च कष्टम् ।

तद्विश्वासार्थमाह—**यदीति** । मे मम । पूर्वजिह्मतां भूतपूर्वं कुटिलत्वं । विमृशसि यदि चिन्तयसि चेत् । अत एव, न दास्यतीति दुर्योधनो मदिष्टं न प्रतिपादयिष्यतीति । समर्थयसे च यदि निश्चिनोषि च चेत् । तर्हि, शरशतकठिनं शराणां मुञ्जाख्ययज्ञियतृणविशेषाणां शतेन यज्ञेषु बहुश उपयुक्तेन कठिनं पाटनवशात् कठोरतलं । हस्तं प्रयच्छ मदभिमुखं प्रसारय । किमर्थमित्याकाङ्क्षायामाह—प्रतिग्रहाणां दीयमानस्य वस्तुनः स्वत्वेन स्वीकरणानां । करणं साधकतमं दानप्रतिग्रहाणामुदकपूर्वत्वनियमात् । इदं सलिलं जलम् । उत्सृज्यत इति शेषः । अर्थात् तव हस्ते । यद्वा तद्वा वस्तु भवतु भवदिष्टं, तत्स्वरूपश्रवणात् प्रागेव तद्दानोदकं भवतो हस्ते विश्वासार्थमिदमुत्सृजामि, तदिदं प्रतिगृह्यतामिति भावः ॥ ३२ ॥

**हन्तेत्यादि** । हन्त हर्षे । हृदयविश्वासः हृदयस्य विश्वासः, सर्वराजसमक्षमुदकदानपूर्वं कृतां प्रतिज्ञां दुर्योधनो न व्यभिचरिष्यतीति प्रत्ययः ।

**येषामित्यादि** । गतिः शरणं । कुरु प्रार्थनायां लोट् । संविभागं राज्यांशदानम् । एषा मम भिक्षा च दक्षिणा च, भवति । अस्य मदीप्सितस्य करणे गुरुदक्षिणादानचारितार्थ्यं न केवलं, गुरुभिक्षादानपुण्यमपि ते सिद्धं भविष्यतीत्यभिप्रायः । 'एषा हि भिक्षा' इति पाठान्तरम् ॥ ३३ ॥

**शकुनिः**—(सोद्वेगम्) मा तावद् भोः !

उपन्यस्तस्य शिष्यस्य विश्वस्तस्य च गौरवे ।
यज्ञप्रस्तुतमुत्पाद्य युक्तेयं धर्मवञ्चना ॥ ३४ ॥

**द्रोणः**—कथं धर्मवञ्चनेति । मा तावद् भो गान्धारविषयविस्मित ! शकुने ! त्वदनार्यभावात् सर्वलोकमनार्यमिति मन्यसे । हन्त भोः !

---

**सोद्वेगमि**त्यादि । उद्वेग आवेगः । मा तावदिति पाण्डवानुग्राहकद्रोणवाक्यप्रतिक्षेपः । भो इति द्रोणं प्रति कोपसूचनम् । 'आचार्य !' इत्यपि ग्रन्थान्तरे पठ्यते ।

**उपन्यस्तस्ये**ति । उपन्यस्तस्य 'प्रतिगृह्यतां दक्षिणा' इति गुरुभक्तोचितमुपन्यस्तवतः । कर्तरि क्तः । गौरवे गुरुत्वे त्वदीये । विश्वस्तस्य अयं गुरुत्वान्मद्धितपरो ममाहितमर्थं दक्षिणात्वेन न निर्देक्ष्यतीति प्रत्ययमुपगतस्य । शिष्यस्य, यज्ञप्रस्तुतं यज्ञरूपं प्रस्तुतम् । अथवा यज्ञे प्रस्तुतम् ईप्सितदानप्रतिज्ञानं पूर्वोक्तमित्यर्थः । उत्पाद्य, इयं, धर्मवञ्चना धर्मो गुरुदक्षिणा तेन हेतुना वञ्चना अतिसन्धानम् ईप्सितदानप्रतिज्ञापनद्वारेण स्वकीयराज्यार्धहापनरूपमित्यर्थः । युक्ता न्याय्येति काकुः, अयुक्तेत्यर्थः । यथोक्तवञ्चनोद्देशेनैव भवता दुर्योधनोऽस्मिन् यज्ञे प्रवर्तित इति भावः ॥ ३४ ।

**कथमि**त्यादि । मा तावदिति शकुनिवाक्यप्रतिक्षेपः । गान्धारविषयविस्मित! गान्धारविषयेण गान्धारदेशेन अर्थात् तदाधिपत्येन विस्मित ! गर्वित ! । त्वदनार्यभावात् तव अनार्यभावाद् अयुक्तकारित्वाद् द्यूतधर्मेण धर्मपुत्रवञ्चकत्वरूपात् । सर्वलोकं सर्वं जनं मादृशमार्यजनमपि । अनार्यमिति मन्यसे, अनार्यम् असाधुं जानीषे इत्यर्थः । इह इतिशब्दस्य कर्मत्वाभिधायिनो द्वितीययोक्तेऽपि कर्मत्वे सहप्रयोगः 'यं सन्न्यासमिति प्राहुः' (६।२) इति भगवद्गीताप्रयोगवद् 'उक्तार्थानामप्रयोग' इति न्यायस्य प्रायिकत्वाश्रयणात् समानार्थयोः सहप्रयुक्तयोः क्वचित् सम्भूयार्थबोधकत्वाश्रयणाच्च । अथवा इति अनार्यं मन्यसे, इति उक्तेन वञ्चकत्वेन प्रकारेण, अनार्यं मन्यसे, उक्तवञ्चकत्वरूपासाधुत्वविशिष्टं मन्यस इत्यर्थः । यद्वा इतिशब्दो हेतौ । ईप्सितदानप्रतिज्ञापनात् पाण्डवार्धराज्यदानवरणाद्वा हेतोरित्यर्थः । हन्तेति वाक्यारम्भे, हन्त ते कथयिष्यामि न्याय्यं वाक्यमित्यर्थः । 'विषयमात्रविस्मित' इति ग्रन्थान्तरे पाठः ॥

भ्रातॄणां पैतृकं राज्यं दीयतामिति वञ्चना ।
किं परं याचितैर्दत्तं बलात्कारेण तैर्हृतम् ॥ ३५ ॥

**सर्वे** — कथं बलात्कारेण नाम ।

**भीष्मः** — पौत्र ! दुर्योधन ! अवभृथस्नानमात्रमेव खलु तावत् । मित्रमुखस्य शत्रोः शकुनेर्वचनं न श्रोतव्यम् । पश्य पौत्र !,

यत् पाण्डवा द्रुपदराजसुतासहायाः
कान्ताररेणुपरुषाः पृथिवीं भ्रमन्ति ।
(तऽ्य)त् त्वं च तेषु विमुखस्त्वयि ते च वामा-
स्तत् सर्वमेव शकुनेः परुषावलेपः ॥ ३६ ॥

---

**भ्रातॄणामिति** । भ्रातॄणां पाण्डवानां । पैतृकं तात्पितृसम्बन्धि, न तु दुर्योधनापितृसम्बन्धि । राज्यं, दीयतामिति, उपदेश इति शेषः । वञ्चना इयं काकूक्तिः, न वञ्चनेत्यर्थः । अयं चोपदेशो दुर्योधनमानरक्षणायैव कृतः, न तु पाण्डवानुग्रहायेत्याभिप्रायं गुणदोषप्रश्नभङ्ग्याविष्करोति — याचितैः अस्मत्प्रार्थनाभिः भावे क्तः । दत्तं दानम् । अर्थाद्राज्यस्य । किं परं किं प्रशस्तम् । वरमिति ग्रन्थान्तरे पाठः, तदा मनागिष्टमित्यर्थः । पक्षान्तरमाह — तैः भ्रातृभिः पाण्डवैः । बलात्कारेण शूरकर्मणा युद्धप्रसभेनेत्यर्थः । हृतं राज्यस्य हरणं । किं परं किं प्रशस्तम् । त्वमेव कार्यगुरुलघुभावं चिन्तयित्वा कथयेत्यर्थः । अस्मत्सान्त्वाननुसरणे हि दुर्योधनस्य मानहानिः स्यादिति भावः ॥ ३५ ॥

**कथमिति** । कथं बलात्कारेण नाम, हृतं भविष्यतीति शेषः । इयं भीष्मातिरिक्तानामीर्ष्योक्तिः । नामेति क्रोधे ॥

**पौत्रेत्यादि** । अवभृथस्नानमात्रमेव खलु तावद् , इदानीं वर्तते, न तु द्यूतं, यत्र शकुनिवचनं प्रमाणीकर्तव्यमित्यर्थः । मित्रमुखस्य मित्रं प्रियावेदकं मुखं वाग् यस्य स तथाभूतः तस्य, वाङ्मात्रमित्रस्येत्यर्थः । शत्रोः क्रियायामामित्रस्य । 'नखलु मित्रमुखस्य शत्रोः शकुनेर्वचनं श्रोतव्यम्' इति ग्रन्थान्तरे पाठः ।

शत्रुत्वमुपपादयति — **यदिति** । द्रुपदराजसुतासहायाः द्रौपदीसहिताः । पाण्डवाः, कान्ताररेणुपरुषाः सन्तः कान्तारे दुर्गमे मार्गे ये रेणवः पांसवः तैः परुषाः कर्बुरकायाः सन्तः । पृथिवीं भूमिं । भ्रमन्ति पर्यटन्ति । इति यत्, त्वं च,

**दुर्योधनः**—भवतु, एवं तावदाचार्य ! पृच्छामि ।

**द्रोणः**—पुत्र ! कथय ।

**दुर्योधनः**—

यत् पुरा ते सभामध्ये राज्ये माने च धर्षिताः ।
बलात्कारसमर्थैस्तैः किं रोषो धारितस्तदा ॥ ३७ ॥

**द्रोणः**—अत्रेदानीं धर्मच्छलेन वञ्चितो द्यूताश्रयवृत्तिर्युधिष्ठिरः प्रष्टव्यः,

---

तेषु पाण्डवेषु विषये । विमुखः विरुद्धवृत्तिः । ते च पाण्डवाश्च । त्वयि, वामाः विमुखाः । इति यत्, तत् सर्वमेव, अनर्थजातं । शकुनेः, परुषावलेपः परुषः तीक्ष्णः अवलेपः अक्षशौण्डत्वनिमित्तो गर्वः गर्वजनितमित्यर्थः । जन्यजनकयोरभेदोपचारः । 'परुषं कर्बुरे रूक्षे' इति मेदिनी ॥ ३६ ॥

भवत्वित्यादि । भवतु शकुनिदोषवर्णनमप्रस्तुतत्वाद् दूरेऽस्त्वित्यर्थः । एवं वक्ष्यमाणेन प्रकारेण । 'भवतु' इत्यतः प्राक् 'पितामह !' इति, 'आचार्य ! ' इत्यस्य स्थाने 'आचार्यम्' इति च ग्रन्थान्तरे पठ्यते ॥

पुत्रेत्यादि ॥

यदिति । पुरा द्यूतकाले । ते पाण्डवाः । सभामध्ये, राज्ये, माने चित्तसमुन्नतौ च । धर्षिताः अस्माभिराक्रान्ताः, द्यूतजयेन तेषां राज्यमपहृतं पत्नीवस्त्रापहारादिना मानभङ्गश्च कृत इत्यर्थः । इति यत्, तदा तस्मिन् उभयविधधर्षणकाले कोपसर्वस्वप्रकाशनयोग्ये । बलात्कारसमर्थैः, तैः पाण्डवैः । रोषः कोपः, किं धारितः कुतो नियन्त्रितः । बलात्कारप्रदर्शनार्हे तस्मिन्नपि काले तदप्रदर्शनं तेषां बलात्कारासमर्थत्वं हि गमयतीत्यभिप्रायः ॥ ३७ ॥

अत्रेत्यादि । अत्र रोषधारणविषये । धर्मच्छलेन धर्म इति छलं वस्तुतो न धर्मः धर्मच्छलं तेन द्यूतपराजयोपनतदासभावानतिक्रमणात्मना धर्माभासेनेत्यर्थः। वञ्चितः जनिततदनुरोधदुरभिनिवेशः प्रापितानर्थो वा । द्यूताश्रयवृत्तिः अक्षदेवनव्यसनी । युधिष्ठिरः । प्रष्टव्यः पर्यनुयोक्तव्यः अपराधीत्यर्थः । अपराधी खलु नाम प्रष्टव्यो भवति 'कुतोऽकार्यं कृतवानसी'ति । एतेन रोषधारणं धर्मानुरोधिनो युधिष्ठिरस्यापराधेन कारितं, न तु बलात्कारासामर्थ्येनेति ध्वनितम् ।

येन भीमः सभास्तम्भं तुलयन्नेव वारितः।
यद्येकस्मिन् विमुक्तः स्यान्नास्माञ्छकुनिराक्षिपेत्॥ ३८॥

भीष्मः—अन्यत् प्रस्तुतमन्यदापतितम्। भो आचार्य! कार्यमत्र गुरुतरं, न कलहः।

द्रोणः—मात्र कर्दनं कार्यं, कलह एव भवतु।

भीष्मः—प्रसीदत्वाचार्यः। पश्य पौत्र!,

ये दुर्बलाश्च कृपणाश्च निराश्रयाश्च
त्वत्तश्च साम मृगयन्ति न गर्वयन्ति।

---

अपराधं विशदयितुमाह—येनेति। येन, भीमः, सभास्तम्भं द्यूतशालास्थान् स्तम्भान् जातावेकवचनम्। तुलयन्नेव उन्मिमान एव। उन्मानमिह तारतम्यपरीक्षणं, 'किमनेन स्तम्भेन धर्षयितॄन् प्रहरेयं किममुना स्तम्भेने'ति तत्सारफल्गुतां दृष्ट्वा पर्यालोचयन्नेव सन्नित्यर्थः। वारितः 'मा कुरु संरम्भमि'ति प्रतिषिद्धः। स प्रष्टव्य इति पूर्ववाक्येन सम्बन्धः। भीमः, एकस्मिन् उक्ते कस्मिंश्चित् संरम्भे। विमुक्तश्चेद् धर्मपुत्रेणानिवारितोऽभविष्यच्चेत्। शकुनिः, अस्मान्, नाक्षिपेत् न निन्देद् इदानीम्। तस्य तदानीमेव द्यूतसभायां भीमहतत्वसम्भवादिति तात्पर्यम्। अत्र व्यङ्ग्यस्य शकुनिवधस्य शकुनिकर्तृकानाक्षेपं वाच्यं प्रत्युपपादकतया गुणीभावो वेदितव्यः॥ ३८॥

अन्यदित्यादि। प्रस्तुतं वस्तु राज्यसंविभागार्थो दुर्योधनानुनयः, आपतितं तु कलहः॥

मात्रेति। अत्र संविभागविषये कर्दनं कुत्सितः शब्दः 'एषा च भिक्षा मम दक्षिणा च' इत्येवंरूपो याच्ञादैन्यपरः शब्द इत्यर्थः। मा कार्यं न कर्तुमर्हम्। पूर्वं तत् दुर्योधनधर्मबुद्धिविस्रम्भिणा मया कृतम्; दुर्योधनस्य शकुनिदुर्बुद्धिनेयतायां त्विदानीमप्यनुवर्तमानायामस्थान एव तत् प्रयुक्तमित्यनुशय्यत एवेति भावः। कर्दनमित्यस्य स्थाने कदर्थनमिति वा पाठः। कुत्सितं याचनमिति तदर्थः। कलह एव भवतु विवाद एव काममस्तु। न्यायानुगृहीतेन कलहेनैव कार्यं साधयाम इति भावः। एतेन दुर्योधनवाक्यविषयोऽमर्षः प्रकाशितः॥

रुष्टमाचार्यं कार्यहानिभिया शमयन् दुर्योधनं चोपच्छन्दयन्नाह—प्रसीदत्वित्यादि। हे पौत्र! पश्य प्रतीक्षस्व। ताम् इत्याक्षेपलभ्यं श्लोके यच्छब्दोपादानात्।

ज्येष्ठो भवान् प्रणयिनस्त्वयि ते कुटुम्बे
तान् धारयिष्यसि मृगैः सह वर्तयन्तु ॥ ३९ ॥

**शकुनिः** — वर्तयन्तु वर्तयन्तु ।

**कर्णः** — भो आचार्य ! अलममर्षेण । दुर्योधनो हि नाम,

हितमपि परुषार्थं रुष्यति श्राव्यमाणो
वरपुरुषविशेषं नेच्छति स्तूयमानम् ।

---

**य इत्यादि** । ये पाण्डवाः । दुर्बलाश्च बलहीनाश्च । कृपणाश्च कुत्सिताश्च । निराश्रयाश्च अशरणाश्च । भवन्तीति शेषः । अत एव त्वत्तः त्वया सह । साम सान्त्वं । मृगयन्ति इच्छन्तीत्यर्थः । न गर्वयन्ति च गर्वं न भजन्ते च, त्वय्युच्चैश्शिरसो न भवन्तीत्यर्थः । तान् पश्येति पूर्वेण सम्बन्धः । भवान् ज्येष्ठः कनिष्ठपालनाधिकृत इत्यर्थः । भवति । ते पाण्डवाः । त्वयि, प्रणयिनः स्निग्धवृत्तयः । भवन्ति । इत्थं वस्तुस्थितौ सत्यां प्रतिपत्तिं द्विकोटिकं प्रश्नकाक्वा पृच्छति — तान् पाण्डवान् । कुटुम्बे धारयिष्यसि स्वकुटुम्बे अन्तर्भाव्य भरिष्यसि किम् । मृगैः हरिणैः सह । वर्तयन्तु यावज्जीववनवासेनैव देहयात्रां कुर्वन्तु किम् । अर्थात् ते, हरिणसहवर्तनेन कार्यरूपेण कारणभूताया उपेक्षाया आक्षेपाद् 'अत्यन्तमेव तान् उपेक्षिष्यस एव किम्' इति पर्यवसितः प्रश्नार्थः । अनयोश्च धारणोपेक्षापक्षयोः कतरः श्रेयानिति त्वमेव विमृश्य कथयेत्यभिप्रायः । उपेक्षापक्षस्य तत्कार्यमुखेन कथनं दुष्टत्वादनुपादेय एव स इति बोधनार्थम् । इह कार्येण प्रस्तुतेन कारणस्य प्रस्तुतस्य द्योतनात् प्रस्तुताङ्कुरालङ्कारः । 'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः' इति तल्लक्षणम् ॥ ३९ ॥

**वर्तयान्त्वित्यादि** । मृगसहवर्तनपक्ष एव स्वीकार्य इति दुर्योधनं प्रति दुरुपदेशोऽयं शकुनेस्तदनार्यत्वानुरूपः ॥

विगृह्यव्यवहारात् कार्यविपरीतादाचार्यं वारयन् कार्यसिद्ध्यनुकूलं व्यवहारमार्गं कर्णः कल्याणबुद्धित्वाद् बोधयति—**भो** इत्यादिना । अमर्षेण रोषेण 'भ्रातॄणां पैतृकम्' इत्यादित्वद्वाक्याद् दुर्योधनहृदयसन्दीपनात् प्रकाशितेन । अलं साध्यं नास्ति । दुर्योधन इत्यादि श्लोकान्वयि ।

कुत इति चेदाह—**हितमिति** । हि यतः । दुर्योधनो नाम । परुषार्थं निष्ठुरवाच्यं । हितमपि पथ्यवाक्यमपि । श्राव्यमाणः सन्, रुष्यति कुप्यति तेज-

गतमिदमवसानं रक्ष्यतां शिष्यकार्यं
गज इव बहुदोषो मार्दवेनैव वाह्यः ॥ ४० ॥

**द्रोणः**—वत्स ! कर्ण ! तेजस्वि ब्राह्मण्यम् । काले सम्बोधितोऽस्मि । एषोऽहं भवच्छन्दमनुवर्ते । पुत्र ! दुर्योधन ! अहं तव प्रभावी ननु ।

**भीष्मः**—एष इदानीं मार्गेणारब्धः । सान्त्वं हि नाम दुर्विनीतानामौषधम् ।

**दुर्योधनः**—न ममैव, कुलस्यापि मे भवान् प्रभुः ।

**द्रोणः**—एतत् तवैव युक्तम् । तत् पुत्र !

---

स्वित्वात् । वरपुरुषविशेषं श्रेष्ठपुरुषगतं गुणातिशयं । स्तूयमानं, नेच्छति न रोचयते मानित्वात् । ईदृशस्वभावता दुर्योधनस्य प्रसिद्धेति नामपदेन द्योत्यते । इदं यत् तव सामर्षं वचनं, यच्च तदनुरूपं दुर्योधनशकुन्योः प्रतिवचनम् एतद् उभयमपीत्यर्थः । अवसानं गतं समाप्तिं प्राप्तं, भूय ईदृशं न भवितुमर्हमिति भावः । शिष्यकार्यं पाण्डवकार्यं दुर्योधनकार्यं च । तत्राद्यं राज्यांशप्राप्तिरूपं, द्वितीयं गुरुदक्षिणादानप्रतिज्ञानरूपं । रक्ष्यतां परिपाल्यतां न तु कोपादिना हाप्यताम् । तदर्थं किं कर्तव्यमिति चेदाह—बहुदोषः बहवो दोषा अनर्था यस्मात् कुपितादुत्पद्यन्ते स बहुदोषः । अर्थाद् दुर्योधनः । गज इव, मार्दवेन मृदुकर्मणा सान्त्वेनैवेत्यर्थः । वाह्यः नेतव्यः कार्यसिद्धिकक्ष्याम् ॥ ४० ॥

वत्सेत्यादि । तेजस्वि ज्वलनस्वभावम्, अतः शकुनिवचनात् कोपेन ज्वलितं मे हृदयमासीदित्यभिप्रायः । काले बोधनयोग्येऽवसरे । सम्बोधितः कार्यसिद्ध्युपायं सम्यग् बोधितः । भवच्छन्दं भवदभिप्रायम् । प्रभावी ननु प्रभावो माहात्म्यम् अथवा अनुशासनस्वातन्त्र्यं तद्वान् किम् । प्रश्ने ननुशब्दः । 'प्रभावी' इत्यस्य स्थाने 'प्रभवामि' इति मातृकान्तरे पाठः ॥

एष इत्यादि । मार्गेण कार्यसाधकेन पथा । स च सान्त्वम् । आरब्धः आरब्धवान् व्यवहर्तुम् । भुक्ता ब्राह्मणा इतिवत् क्तः । दुर्विनीतानाम् अविधेयानाम् । औषधं दुर्विनयव्याधिभेषजं विधेयत्वापादकमित्यर्थः । वाक्यमिदमात्मगतं स्यात् ॥

न ममैवेत्यादि । प्रभुः अनुशासनस्वतन्त्रः ॥

एतदित्यादि । एतद् ईदृशं सर्वभावविश्वस्तत्वद्योतकं गुरुभक्तिपूतं वचनमित्यर्थः ।

त्वं वञ्च्यसे यदि मया न तवात्र दोष-
स्त्वां पीडयामि यदि वास्तु तवैष लाभः ।
भेदाः परस्परगता हि महाकुलानां
धर्माधिकारवचनेषु शमीभवन्ति ॥ ४१ ॥

**दुर्योधनः**—तेन हि समर्थयितुमिच्छामि ।

**द्रोणः**—पुत्र ! केन समर्थयितुमिच्छसि ।

---

**तत् पुत्र ! त्वमिति** । तत् मयि सर्वभावविश्वस्तत्वाद्धेतोः । हे पुत्र ! मया त्वं वञ्च्यसे यदि, अत्र तव दोषो न, अपि तु ममैव दोषः विश्वस्तशिष्यवञ्चकत्वापवादलक्षणो भविष्यति । अतस्त्वद्वञ्चनमयशस्यमात्मनः कथमहं कुर्यां, किन्तु हितमेव ते कुर्यामिति विश्वसिहीति भावः । वा अथवा । त्वां पीडयामि यदि प्रतिश्रुतदक्षिणादानं निर्बन्धेन कारयामि चेदित्यर्थः । एषः पीडनं, विधेयप्राधान्यात् पुंस्त्वम् । तव लाभोऽस्तु । स्वप्रतिज्ञानुपालनं गुरुदाक्षिणासमर्पणं भ्रातृसंविभाग इत्येवंरूपबहुविधधर्मसिद्धिहेतुरित्यङ्गीक्रियतामित्यभिप्रायः । 'वास्तु' इत्यस्य स्थाने 'वा स' इति पाठान्तरम् । चिरप्ररूढे द्वेषे विद्यमाने कथमहं तेषां राज्यसंविभागं कुर्यामिति चेत्, मदनुशिष्टधर्मापेक्षया त्वया द्वेषस्त्यक्तव्य इति सामान्यन्यायेन द्योतयन्नाह—महाकुलानाम् उत्तमकुलप्रसूतानां पुरुषाणां । परस्परगताः अन्योन्यसम्बद्धाः । भेदाः विद्वेषाः । धर्माधिकारवचनेषु धर्मोऽधिक्रियते एष्विति धर्माधिकाराणि धर्मनिरूपकाणि तथाभूतेषु वचनेषु गुरुजनवाक्येषु, अथवा धर्माधिकाराः धर्मोपदेशाधिकारिणो गुरुजनाः तेषां वचनेषु अनुशासनवाक्येष्वित्यर्थः । प्रवृत्तेष्विति शेषः । शमीभवन्ति शमाः सन्धयः शान्तिगुणा वा, अशमाः शमा भवन्ति शमीभवन्ति शमात्मना विक्रियां प्राप्नुवन्ति, मिथो भेदाः प्ररूढा अपि महाकुलानां गुरुजनोपदिष्टधर्मापेक्षागौरवात् स्वरूपतो नश्यन्ति, शमाश्चोत्पद्यन्त इति भावः । भेदविरुद्धेष्वपि शमेषु भेदस्वरूपनाशोत्तरकालभावित्वमात्रेण भेदविकारत्वोपचारः । अनेन सामान्यन्यायोपन्यासेन प्रस्तुतविशेषद्योतनादप्रस्तुतप्रशंसालङ्कारः । शमीभवन्तीति 'कृभ्वस्तियोगे—' (५-४-५०) इति च्विप्रत्ययः ॥ ४१ ॥

**तेन हीत्यादि** । तेन हि तर्हि । समर्थयितुं मन्त्रयित्वा निर्णेतुम् ॥

**पुत्रेत्यादि** ॥

भीष्मेण कर्णेन कृपेण केन किं सिन्धुराजेन जयद्रथेन ।
किं द्रौणिनाहो विदुरेण सार्धं पित्रा स्वमात्रा वद पुत्र ! केन ॥ ४२ ॥

**दुर्योधनः**—नहि नहि, मातुलेन ।

**द्रोणः**—किं शकुनिना । हन्त विपन्नं कार्यम् ।

**दुर्योधनः**—मातुल ! इतस्तावत् । वयस्य ! कर्ण ! इतस्तावत् ।

**द्रोणः**—(आत्मगतम्) भवतु, एवं तावत् करिष्ये । (प्रकाशम्) वत्स! गान्धारराज! इतस्तावत् ।

**शकुनिः**—अयमस्मि ।

**द्रोणः**—वत्स !

क्रोधप्रायं वयो जीर्णं क्षन्तव्यं वटुचापलम् ।
अस्य रूक्षस्य वचसः परिष्वङ्गः शमीक्रिया ॥ ४३ ॥

---

**भीष्मेणे**त्यादि । द्रौणिना द्रोणपुत्रेण अश्वत्थाम्ना । आहो अथवा । इह कतिपयानां नामनिर्देशः शकुनिव्युदासं द्योतयितुम्, एष्वन्यतम एव तव मन्त्रणसहायो भवितुमर्हो, न तु शकुनिरिति ॥ ४२ ॥

**नही**त्यादि । मातुलेन मातृभ्रात्रा शकुनिना ॥

**किं शकुनिने**त्यादि । हन्तेत्यतः प्राक् स्वगतमिति पठनीयं, कार्यविपत्तिवचनस्य शकुन्यश्रव्यत्वात् । विपन्नं नष्टम् । शकुनिर्जैह्म्याद् मत्कृताक्रोशकोपाच्च कार्यविपरीतमेव कथयिष्यतीत्यभिप्रायः ॥

मिथोमन्त्रणार्थं परमाप्ताभिमतौ शकुनिकर्णावाह्वयति—**मातुले**त्यादि । इत इति मन्त्रणयोग्यदेशनिर्देशः ॥

दुर्योधने शकुनिदुर्मन्त्रितमपेक्षमाणे सति प्रतिपत्तिं मनसिकृत्याह—**भवत्वि**त्यादि ॥

**अयमि**त्यादि ॥

**वत्से**त्युपच्छन्दनार्थं वात्सल्यद्योतकम् ।

शकुनिं प्रसादयति—**क्रोधे**त्यादि । क्रोधप्रायं कोपबहुलं । वटुचापलं । बालोचितं मादृशानुचितं चपलकर्म रूक्षभाषणलक्षणम् । अस्य 'नास्माञ्छकुनिराक्षिपेदि'ति पूर्वोक्तस्य । परिष्वङ्गः वात्सल्यालिङ्गनं । शमीक्रिया शान्तीकरणं प्रायश्चित्तमित्यर्थः । शमशब्दाच्छमवद्वृत्तेश्च्विप्रत्ययः, तद्युक्ताच्च कृञः शप्रत्ययः ॥ ४३ ॥

**भीष्मः**—(आत्मगतम्)

एष शिष्यस्य वात्सल्याच्छकुनिं याचते गुरुः ।
एवं सान्त्वीकृतोऽप्येष नैव मुञ्चति जिह्मताम् ॥ ४४ ॥

**शकुनिः**—(आत्मगतम्) अहो शठः खल्वाचार्यः, स्वकार्यलोभान्मां सान्त्वयति ।

(सर्वे परिक्रम्योपविशन्ति ।)

**दुर्योधनः**—मातुल ! पाण्डवानां राज्यार्धं प्रति को निश्चयः ।

**शकुनिः**—न दातव्यमिति मे निश्चयः ।

**दुर्योधनः**—दातव्यमिति वक्तुमर्हति मातुलः ।

**शकुनिः**—यदि दातव्ये राज्ये किमस्माभिः सह मन्त्रयसे । ननु सर्वमेव प्रदीयताम् ।

---

**एष** इत्यादि । सान्त्वीकृतोऽपि अनुनीतोऽपि । जिह्मतां कुटिलत्वम् । 'सान्त्वीकृतो हि' इति ग्रन्थान्तरे पाठः ॥ ४४ ॥

**अहो** इत्यादि । शठः वञ्चकः ॥

उपविष्टेषु सर्वेषु पृच्छति—**मातुले**त्यादि । को निश्चयः किं तव मतम् ।

**न दातव्यमि**त्यादि । मामपृष्ट्वैवाचार्यस्य राज्यार्धयाच्ञावसरोत्पादनं त्वया पूर्वं कृतमयुक्तमित्याशयः ॥

**दातव्यमि**त्यादि । इति वक्तुमर्हति, अनिच्छतापि भवता एवमिदानीं वक्तव्यमापतितं मम दानप्रतिज्ञारभसदोषादिति भावः ॥

**यदी**त्यादि । राज्ये यदि दातव्ये राज्यं दातव्यं चेत् तर्हीत्यर्थः । सत्सप्तमीमात्रप्रयोगेण पर्याप्तौ यदिशब्दस्य सहप्रयोगो व्यवहारवैचित्र्यात् । अथवा, सप्तमीमात्रप्रयोगे यद्यर्थाक्षेपी तर्ह्यर्थः सप्तमीवाच्यः, यदि दातव्यं राज्यं तर्हीति तदार्थप्रतीतेः । तत्राक्षेपलभ्योऽपि यद्यर्थः स्पष्टतरप्रतिपत्तये यदिशब्दप्रयोगेण वाच्यतां नीयते । यथा 'यदि दातव्यं राज्यं तर्हि किमस्माभिः सह मन्त्रयसे' इति प्रयोगे तर्ह्यर्थः सामर्थ्यगम्योऽपि तर्हिपदप्रयोगेण वाच्यतां नीयते, तद्वत् । ननु सर्वमेव प्रदीयतामित्यमर्षसर्वस्वाविष्करणम् ॥

**दुर्योधनः**—वयस्य ! अङ्गराज ! भवानिदानीं न किञ्चिदाह ।

**कर्णः**—इदानीं किमभिधास्यामि,

रामेण भुक्तां परिपालितां च सुभ्रातृतां न प्रतिषेधयामि ।
क्षमाक्षमत्वे तु भवान् प्रमाणं सङ्ग्रामकालेषु वयं सहायाः ॥ ४५ ॥

**दुर्योधनः**—मातुल ! बलवत्प्रत्यमित्रोऽनुपजीव्यश्च कश्चित् कुदेशश्चिन्त्यताम् । तत्र वसेयुः पाण्डवाः ।

---

मातुलाभिप्रायेऽवगते कर्णं पृच्छति—**वयस्येत्यादि** । न किञ्चिदाह, आवयोरेवमभिप्रायविसंवादे समापतिते तव तूष्णीम्भावो न युक्त इत्यर्थः ॥

**इदानीमिति** । इदानीं युवयोर्विसंवादावसरेऽस्मिन् । किमभिधास्यामि निर्णायकं न किञ्चिद् वक्ष्यामि ।

कुत इति चेदाह — **रामेणेति** । रामेण दाशरथिना । भुक्तां फलतोऽनुभूताम् , अत एव परिपालितां च, सुभ्रातृतां प्रशस्तो भ्राता यस्य स सुभ्राता तस्य भावः सुभ्रातृता ताम् । न प्रतिषेधयामि न प्रतिषेधामि । स्वार्थे णिच् । राज्यार्धदाने त्वया क्रियमाणे सत्यवश्यम्भाविनं तव पाण्डवानां च सौभ्रात्रलक्षणं महागुणं स्वयं घटयितुं योग्यमघटयन्नपि कथमहं विघटयेयमिति भावः । एवं तावत् सुभ्रातृत्वाप्रतिषेधभङ्ग्या सुभ्रातृत्वकारणस्य राज्यार्धदानस्य प्रस्तुतस्याप्रतिषेधो द्योतितः । तर्हि राज्यार्धदानं युक्तमित्येव स्पष्टमुच्यतामिति चेत् तत्राह—क्षमाक्षमत्वे तु राज्यार्धदानस्य युक्तत्वायुक्तत्वविमर्शविषये पुनः । भवान् प्रमाणं त्वमेव निर्णयप्रभविष्णुः न त्वहं, युक्तत्वोक्तौ युद्धाप्रसङ्गेन मय्यर्जुनवधप्रतिज्ञानिर्वहणकातरत्वशङ्कोदयाद् , अयुक्तत्वोक्तौ च धर्महापनदोषप्रसङ्गादिति भावः । इदानीं ममास्मिन् कार्यसङ्कटे त्वत्सौहार्दमुदासीनं चेत्, तत् कुत्रोपयोक्ष्यत इत्याशङ्कायामाह—वयम् अहं मद्वर्ग्याश्च । संग्रामकालेषु अक्षमत्वपक्षाश्रयेण त्वया पाण्डवैः सह यदा युद्धं प्रवर्त्यते तेषु समयेष्वित्यर्थः । सहायाः, अर्थात् तव । भविष्याम इति शेषः । इह सुभ्रातृशब्दे 'वन्दिते भ्रातुः' (५-४-१५७) इति कपः प्रतिषेधः ॥ ४५ ॥

**मातुलेत्यादि** । बलवत्प्रत्यमित्रः बलवन्तः प्रत्यमित्राः शत्रवो येषु स तथाभूतः । अनुपजीव्यश्च असस्यप्रसवतयोपजीवितुमयोग्यश्च । कुदेशः कुत्सितो देशः । चिन्त्यतां चिन्तयित्वा कथ्यताम् । पाण्डवाः, तत्र वसेयुः तथाविधं कुदेशं पाण्डवेभ्यो दद्याम् । तावता न काचिदस्माकं हानिः, प्रतिज्ञा च सत्या भविष्यतीत्यभिप्रायः ॥

**शकुनिः**—हन्त भोः!

शून्यमित्यभिधास्यामि कः पार्थाद् बलवत्तरः ।
ऊषरेष्वपि सस्यं स्याद् यत्र राजा युधिष्ठिरः ॥ ४६ ॥

**दुर्योधनः**—अथेदानीं,

गुरुकरतलमध्ये तोयमावर्जितं मे
श्रुतमिह कुलवृद्धैर्यत् प्रमाणं पृथिव्याम् ।
तदिदमपनयो वा वञ्चना वा यथा वा
भवतु नृप! जलं तत् सत्यमिच्छामि कर्तुम् ॥ ४७ ॥

---

**हन्तेति** । हन्तभो इति विषादे । स च वक्ष्यमाणमर्थमनुसन्धाय ।

**शून्यमिति** । शून्यं तुच्छं, त्वदुक्तो विशेषणद्वयविशिष्टो देशः शशशृङ्गादिवदप्रसिद्ध इत्यर्थः । इति, अभिधास्यामि कथयिष्यामि । अप्रसिद्धत्वं विशेषणाप्रसिद्धिद्वारेण साधयति—पार्थाद् अर्जुनात् । बलवत्तरः, कः, न कोऽपि । अतो बलवत्प्रत्यमित्रत्वमप्रसिद्धम् । यत्र येषु । युधिष्ठिरो राजा भवति, तेषु ऊषरेष्वपि क्षारमृत्तिकात्मकेष्वपि देशेषु । सस्यं, स्यात् उत्पद्येत । अतोऽनुपजीव्यत्वमप्यप्रसिद्धम् । कुदेशदानेऽपि पाण्डवानां वृद्धिरेव भविष्यतीति कुदेशोऽपि तेभ्यो न दातव्य इति भावः ॥ ४६ ॥

**अथेदानीमिति** श्लोकान्वयि ।

**गुर्विति** । अथेति उक्तपक्षाक्षेपे । इदानीं, यत्, इह पृथिव्यां लोके । प्रमाणं देयस्य स्वत्वनिवृत्तिपूर्वकपरस्वत्वाभिनिर्वर्तकं दानप्रतिग्रहमुख्यसाधकं । कुलवृद्धैः भीष्मादिभिर्निमित्तभूतैः । श्रुतम् अधीतं, मया कुलवृद्धमुखादवगतमित्यर्थः । तत्, तोयं दानाङ्गं जलं । मे मया । गुरुकरतलमध्ये, आवर्जितम् अर्पितम् । अतो दानप्रतिग्रहौ प्रागेव निष्पन्नाविति भावः । तदिदं दानजलार्पणम् । अपनयो वा अनीतिनिमित्तकं वा । वञ्चना वा वञ्चनामूलकं वा। यथा वा प्रकारान्तरेण वा । भवतु। हे नृप ! प्रजापाल ! प्रजापालनाधिकृतस्य धर्मतत्त्वं तवापि विदितमेवेति सम्बोधनेन द्योत्यते । तद् जलं । सत्यं तथ्यं । कर्तुम् इच्छामि न तु व्यवस्यामि । इच्छा ममास्ति व्यवसायस्तु भवदनुमत्यधीन इति भावः । अत्र मे इति मयेत्यर्थे निपातः ॥ ४७ ॥

**शकुनिः** — अनृतवचनान्मोचयितव्यो भवान् ननु ।

**दुर्योधनः** — अथकिम् ।

**शकुनिः** — तेनहीतस्तावत् । (उपसृत्य) भो आचार्य ! इहात्रभवान् कुरुराजो भवन्तं विज्ञापयति ।

**द्रोणः** — वत्स ! गान्धारराज ! अभिधीयताम् ।

**शकुनिः** — यदि पञ्चरात्रेण पाण्डवानां प्रवृत्तिरुपनेतव्या, राज्यस्यार्धं प्रदास्यति किल । समानयतु भवानिदानीम् ।

**द्रोणः** — मा तावद् भोः !

(यैः?ये) कर्तुकामैश्छलनं भवद्भिः संवत्सरैर्द्वादशभिर्न दृष्टाः ।
ते पञ्चरात्रेण मयोपनेया वरं ह्यदत्तं विशदाक्षरेण ॥ ४८ ॥

---

**अनृते**त्यादि । नन्विति प्रश्ने । राज्यदानातिरिक्तेन केनाप्युपायेनात्मनोऽनृतवचनान्मोचनमनुमन्यसे किमित्यभिप्रायः ॥

**अथकिमि**ति । अङ्गीकरोमि ॥

**तेने**त्यादि । इतस्तावत्, इह मया सहागच्छेत्यर्थः ॥

**वत्से**त्यादि । अभिधीयतां त्वयैव । त्वमेव मत्कार्ये प्रभुरिति वत्सलामन्त्रणेन सूच्यते ॥

**यदी**त्यादि । पञ्चरात्रेण पञ्चानां रात्रीणां समाहारः पञ्चरात्रं तेन । पाण्डवानाम् अज्ञातवासिनाम् । प्रवृत्तिः वार्ता । उपनेतव्या उपनेतुं शक्या । समानयतु उपनयतु अर्थात् पाण्डवानां प्रवृत्तिम् ॥

**मे**ति । मा तावत् त्वदुक्तः समयो मास्त्वित्यर्थः । भो इति कोपे ।

**य** इति । ये, इदानीमज्ञातवासिन इत्यार्थम् । द्वादशभिः वर्षैः 'अज्ञातवासकाले पाण्डवा दृष्टाश्चेत् पुनरपि द्वादश वर्षाणि वने वसेयुरि'ति पूर्वसमयानुसारेण दर्शने सत्यरण्यवासनेयतया सम्भावितपुनरावर्तनैर्द्वादशसंवत्सरैः करणभूतैरित्यर्थः । छलनं वञ्चनं । कर्तुकामैः कर्तुं कामो येषां तैस्तथाभूतैः । एतेन दर्शनविषयप्रयत्नातिशयवत्त्वं सूचितम् । अथवा द्वादशभिः संवत्सरैश्छलनं कर्तुकामैरित्यस्यायमर्थः— अज्ञातवासकाले दर्शनेन पाण्डवानां पुनर्द्वादशवर्षवनवासक्लेशप्रापणरूपं वञ्चनं कर्तुमभ्युपायम् अतीतवर्षद्वादशकेन मृगयमाणैरिति । भवद्भिः, न दृष्टाः अमुकदेशेऽमुकावस्था वसन्तीति नोपलब्धाः । ते पाण्डवाः । पञ्चरात्रेण, मया उपनेयाः

**भीष्मः**—पौत्र! दुर्योधन! अच्छलो धर्मः। वयमपि तावदस्मिन्नर्थे प्रीताः स्मः। पश्य पौत्र!

वर्षेण वा वर्षशतेन तेषां त्वं पाण्डवानां कुरु संविभागम्।
तस्मात् प्रतिज्ञां कुरु वीर! सत्यां सत्या प्रतिज्ञा हि सदा कुरूणाम्॥

**दुर्योधनः**—एष एव मे निश्चयः।

**द्रोणः**—(आत्मगतम्)

अद्य मे कार्यलोभेन हनूमत्त्वं गता स्पृहा।
लङ्घयित्वार्णवं येन नष्टा सीता निवेदिता॥ ५०॥

---

उपनेतुमानेतुं शक्याः इति काकुः। नोपनेया इत्यर्थः। अशक्यार्थविषयेयं वः समयकल्पनेति भावः। अनया च प्रतिश्रुतार्थस्यादानमेवार्थात् फलितं भवति; ईदृशसमयच्छलेनादानस्य सूचनमपेक्ष्य स्वाक्षरैरेव वचनं ज्याय इत्याह—विशदाक्षरेण स्पष्टवर्णेन वचनेन। अदत्तम् अदानं, भावे क्तः। वरं हि ज्याय एव। वरमिति हीनोत्कर्षेऽव्ययम्। कर्तुकामैरित्यत्र 'तुंकाममनसोरपि' इति तुमुनो मलोपः॥ ४८॥

**पौत्रे**त्यादि। अच्छलः धर्मः छलास्पृष्टत्वमेव धर्मस्य लक्षणम्। अतो गुरुदक्षिणादानरूपे धर्मे छलसम्बन्धं मा कृथा इति भावः। अस्मिन्नर्थे गुरुप्रार्थितेऽर्थे।

**वर्षेणे**त्यादि। वर्षेण अज्ञातवासवर्षे वर्तमानेऽतीते सतीत्यर्थः। वर्षशतेन वा अज्ञातवासानन्तरमपि बहुषु वर्षेष्वतीतेषु सत्सु वा। न तु पञ्चषदिनाभ्यन्तर एवेत्यभिप्रायः। तस्मात् संविभागशीघ्रकरणेऽस्मत्तात्पर्याभावादित्यर्थः। प्रतिज्ञां, सत्यां कुरु फलवतीं कुरु, अशक्यानुष्ठानपञ्चरात्रसमयकल्पनया निष्फलां मा कुर्विति भावः। अत्र 'वीर' इत्यस्य स्थाने 'वत्स' इति पाठान्तरम्॥ ४९॥

**एष** इत्यादि। एष एवेत्येवकारेण शकुन्युपन्यस्तस्य समयबन्धस्याविचाल्यत्वमाह॥

**अद्ये**त्यादि। कार्यलोभेन अतिदूरदेशलङ्घनपूर्वकप्रियजनवार्ताशीघ्रानयनरूपे कार्ये तर्षेण। मे स्पृहा, हनूमत्त्वं गता आञ्जनेयतादात्म्यमहं कामये इत्यर्थः। हनूमत्त्वस्पृहानिमित्तं हनूमद्गतं कार्यसाधनशक्तत्वमुत्तरार्धे निदर्श्यते—येन हनूमता। तद्धितवृत्तौ गुणीभूतस्यापि हनूमत्पदार्थस्य बुद्ध्या प्रविभागाद् येनेति सर्वनाम्ना परामर्शः॥ ५०॥

तत् कुतोनुखलु पाण्डवानां प्रवृत्तिरुपनेतव्या ।

(प्रविश्य)

भटः — जयतु महाराजः । विराटनगराद् दूतः प्राप्तः ।

सर्वे — शीघ्रं प्रवेश्यताम् ।

भटः — यदाज्ञापयथ । (निष्क्रान्तः ।)

(प्रविश्य)

दूतः — जयतु महाराजः ।

सर्वे — किमागतो विराटेश्वरः ।

दूतः — विषादेनावृतो नोपगच्छति ।

सर्वे — कस्तस्य विषादः ।

दूतः — श्रोतुमर्हति महाराजः । यत् तत्संबन्धि सन्निकृष्टं कीचकानां भ्रातृशतं,

---

तदित्यादि । कुतोनुखलु कस्माद् देशात् ॥

इत्थं द्रोणस्य पाण्डवप्रवृत्त्युपलब्धियोग्यदेशाकाङ्क्षायां पाण्डवाध्युष्यमाणं विराटनगरं प्रस्तोतुमुचितमिति तदानुगुण्येन भटप्रवेशः । प्रविश्येत्यादि । विराटनगरात् विराटस्य तन्नामकस्य मत्स्यदेशाधिपस्य नगरात् । दूतः सन्देशहरः ॥

शीघ्रमित्यादि ॥

यदित्यादि ॥

जयत्वित्यादिं ॥

किमित्यादि । विराटशब्दो जनपदेऽपि । तेन तदीश्वरो विराटेश्वरः ॥

विषादेनेत्यादि ॥

क इत्यादि ॥

श्रोतुमित्यादि । यदित्यादि श्लोकान्वयि । यद् यस्मात् कारणात् । सन्निकृष्टम् अन्तरङ्गं विराटस्यालत्वात् । तत्सम्बन्धि विराटसम्बन्धि ।

रात्रौ छन्नेन केनापि बाहुभ्यामेव हिंसितम् ।
दृश्यते हि शरीराणामशस्त्रजनितो वधः ॥ ५१ ॥

**सर्वे** — कथमशस्त्रजनितो वध इति ।

**भीष्मः** — कथमशस्त्रेणेति । (अपवार्य) भो आचार्य! अभ्युपगम्यतां पञ्चरात्रम् ।

**द्रोणः** — (अपवार्य) किमर्थम् ।

**भीष्मः** —

भीमसेनस्य लीलैषा सुव्यक्तं बाहुशालिनः ।
योऽस्मिन् भ्रातृशते रोषः स तस्मिन् फलितः शते ॥ ५२ ॥

**द्रोणः** — कथं भवान् जानाति ।

**भीष्मः** —

---

**रात्रा**वित्यादि । बाहुभ्यामेव हिंसितमित्यत्रानुमापकमाह — अशस्त्रजनितो वधः हस्तमुष्ट्याद्युत्पादितोऽभिघातः । विराटदूतेन दैवादुपहृतोऽयं कीचकच्छन्नवधवृत्तान्तः पाण्डवच्छन्नवासाद्यभ्यूहस्थानतया भीष्मद्रोणौ प्रति यथा सप्रयोजनः, तथा व्यक्तीभविष्यति ॥ ५१ ॥

**कथमि**त्यादि । कथम्, उपपद्यत इति शेषः ॥

**कथमि**त्यादि । अशस्त्रेणेति शस्त्रेण कीचकशतहननं केनापि वीरेण कामं कृतं भवेत् । अशस्त्रेण तु तत् कथं सम्भूतमिति चिन्तैषा । अशस्त्रवधस्य प्रच्छन्नकृतस्य महाबलैकसाध्यस्य प्रच्छन्नवासिभीमसेनकृतत्वं तेन विराटपुरे पाण्डवानामुपलब्धुं शक्यत्वं च विवरीष्यमाणं मनसि निधाय पञ्चरात्रसमयस्याङ्गीकार्यतामाह— **भो** इत्यादि । इयमपवार्योक्तिर्दुर्योधनादिभिर्मा श्रावीति ॥

**किमर्थमि**ति ॥

**भीमे**ति । एषा कीचकशतहिंसनं, विधेयप्राधान्यविवक्षया स्त्रीलिङ्गनिर्देशः । बाहुशालिनः महाबलस्य । भीमसेनस्य, लीला क्रीडा । सुव्यक्तं सुष्ठु स्फुटम् । अत्र सन्देहो नास्ति । तत्रोपपत्तिमाह—अस्मिन् दुर्योधनादौ । भ्रातृशते । यो रोषः कोपः भीमसेनस्य । सः, तस्मिन् शते कीचकशते । फलितः फलवान् जातः ॥ ५२ ॥

**कथमि**त्यादि । जानाति, अर्थाद् भीमसेनलीलेति । कथमित्यतः प्राग् 'अत्र पाण्डवा इति' इति मातृकान्तरे पाठः । स तु नातीव श्लिष्टार्थः ॥

कथं पण्डित! कूलेषु भ्रान्तानां बालचापलम् ।
नाभिजानन्ति वत्सानां शृङ्गस्थानानि गोवृषाः ॥ ५३ ॥

**द्रोणः** — गोवृषा इति । हन्त सिद्धं कार्यम् । (प्रकाशम्) पुत्र! दुर्योधन! अस्तु पञ्चरात्रम् ।

**दुर्योधनः** — अथकिम् । अस्तु पञ्चरात्रम् ।

**द्रोणः** — भो भो यज्ञमनुभवितुमागता राजानः! शृण्वन्तु शृण्वन्तु भवन्तः । इहात्रभवान् कुरुराजो दुर्योधनः, न, न, न, मातुलसहितः यदि पाण्डवानां प्रवृत्तिरुपनेतव्या, राज्यस्यार्धं प्रदास्यति किल । ननु पुत्र! ।

---

**कथं पण्डितेति** । हे पण्डित! ऊहनिपुण! गोवृषाः गोबलीवर्दाः महोक्षाः । कूलेषु नदीतटेषु । भ्रान्तानां तृणादिखादनार्थं सहचरितानां । वत्सानां बालवृषभानां । बालचापलं बाल्यनिमित्तं चपलकर्म, अथवा बालस्य पुच्छस्य चापलम् उत्क्षेपादिकं चपलकर्म । शृङ्गस्थानानि शृङ्गाणां विषाणानां स्थानानि कूलतिर्यक्प्रहारकौतुकजनितानि पदानि च । चार्थो गम्यः । कथं, नाभिजानन्ति न विदन्ति । नित्यसंस्तुतस्य स्वजनस्य चेष्टितशैली स्वजनेन ज्ञायत एवेति भावः । सम्बोधनेन त्वमप्यभिज्ञातुं निपुण इति द्योत्यते । अत्र गोवृषाणां वत्सचापलादिज्ञानेनाप्रस्तुतेन वर्ण्यमानेन भीष्मगतस्य भीमसेनचेष्टितज्ञानस्य प्रस्तुतस्य द्योतनादप्रस्तुतप्रशंसालङ्कारः ॥ ५३ ॥

**गोवृषा** इत्यादि । गोवृषा इति गोवृषा अभिजानन्तीत्येतद्, युक्तमेवेति शेषः । अतो 'भीमसेनस्य लीलैषे'ति भीष्मोक्तिरुपपद्यत इति भावः । हन्तेति हर्षे । स च पाण्डवाज्ञातवासदेशस्यावगतत्वात् तत्र तत्प्रवृत्त्युपलम्भस्य सुकरतां मत्वा । सिद्धं सिद्धप्रायम् । इत्थं भीष्मेण मिथः सम्मन्त्र्य प्रकाशं पञ्चरात्रमङ्गीकरोति—**पुत्रे**त्यादि ॥

**अथकिमिति** । दुर्योधनकृतमङ्गीकारं साक्षिमत्त्वेन द्रढयितुं सर्वान् राज्ञः श्रावयति—**भो भो** इत्यादि । किलेति सम्भावनायाम् । दुर्योधन इति केवलोक्त्या तस्य क्रियास्वातन्त्र्यं शकुनिनिरपेक्षमिव भासमानं शकुनिकोपभयात् प्रतिषेद्धव्यं मत्वाह—न न न केवलो दुर्योधनो नैव । किं तर्हि मातुलसहितः मातुलेन शकुनिना सहितः । ननु पुत्र! ननुशब्दोऽनुज्ञायां श्रावणमनुजानीहीत्यर्थः ॥

**दुर्योधनः** — अथकिम् ।

**द्रोणः** — एतद् द्विजैः सम्प्रधार्यताम् ।

**शकुनिः** — काले ज्ञास्यामि ।

**द्रोणः** — ननु गाङ्गेय ! ।

**भीष्मः** — (आत्मगतम्)

आचार्यस्य यदा हर्षो धैर्यमुत्क्रम्य सूचितः ।
शङ्के दुर्योधनेनैष वञ्च्यमानेन वञ्चितः ॥ ५४ ॥

---

**अथेति** । अथकिं सर्वराजश्रावणमङ्गीकृतमित्यर्थः ॥

**एतदित्यादि** । संप्रधार्यताम् इदानीमेव विमृश्य निर्धार्यताम् । न तावत् पाण्डवप्रवृत्त्युपनयोत्तरकाले विसंवादितव्यमित्यभिप्रायः ॥

**काल इति** । काले पञ्चरात्रावसाने । ज्ञास्यामि पाण्डवप्रवृत्त्युपनयशक्तत्वमवगमिष्यामि । सर्वथा पाण्डवप्रवृत्तिमुपनेतुं नैव शक्ष्यसीत्यभिप्रायः । इदमत्र बोद्धव्यं—भीष्मद्रोणाभ्यां भीमशौर्यबहुमानात् कीचकवधस्य भीमकृतत्वमूहितम् । दुर्योधनेन तु बलैश्वर्यदर्पान्धीकृतचेतसा पाण्डवावहेलिना शकुनिना च तदनुयायिना भीमशौर्ये बहुमानाभावान्न तदूहितमिति । अत्र 'काले' इत्यतः प्राग् 'भवतु भवतु' इति ग्रन्थान्तरे पाठः ॥

**नन्विति** । अनुज्ञाने ननुशब्दः । गाङ्गेय ! गङ्गापुत्र ! । आवाभ्यामभ्युपगतं समयमनुष्ठीयमानमनुजानीहीत्यर्थः ॥

विराटनगरे पाण्डववास ऊहित एव केवलं, न तु निश्चितः । ऊहश्च विसंवदेदपि । उषिता अपि तत्र पूर्वं पाण्डवा इयता कालेनान्यत्र गता भवेयुरपि । तदिदमनालोचयन्नाचार्यः सिद्धमिव स्वार्थं मन्यमानो यदिदानीमतिमात्रं हृष्यति, तन्मन्ये, वञ्चित एव पर्यवसाने भविष्यति, अतिहर्षस्य प्रायेण दुःखपर्यवसायित्वादित्यभिप्रायेण भीष्मो मनसि चिन्तयति—**आचार्यस्येत्यादि** । यदा यस्मात् कारणादित्यर्थः । वञ्च्यमानेन दक्षिणाच्छद्मना पाण्डवराज्यसंविभागाङ्गीकारसंकटे पात्यमानेन । अथवा यज्ञप्रस्तुतोत्पादनपूर्वं यज्ञदक्षिणाप्रतिग्रहप्रार्थनं कार्यमाणेनेत्यर्थः । वञ्चितः समयच्छलेन विफलमनोरथः कृतः ॥ ५४ ॥

(प्रकाशम्) पौत्र! दुर्योधन! अस्ति मम विराटेनाप्रकाशं वैरम्, अथ भवतो यज्ञमनुभवितुमनागत इति । तस्मात् क्रियतां तस्य गोग्रहणम् ।

**द्रोणः** —(अपवार्य) भो गाङ्गेय! प्रियशिष्यः खलु मे तत्रभवान् विराटेश्वरः । किमर्थं तस्य गोग्रहणम् ।

**भीष्मः** —(अपवार्य) ब्राह्मणार्जवबुद्धे!

धर्षिता रथशब्देन रोषमेष्यन्ति पाण्डवाः ।
अस्ति तेषां कृतज्ञत्वमिष्टं गोग्रहणे स्थितम् ॥ ५५ ॥

(प्रविश्य)

**भटः** —जयतु महाराजः । सज्जाः खलु रथा नगरप्रवेशाभिमुखाय ।

**दुर्योधनः** —

---

सर्वथा पाण्डवप्रवृत्त्युपलम्भार्थे यत्ने कर्तव्ये विराटं प्रति अभियानं तदभ्युपायत्वबुद्ध्या कर्तव्यमिति मन्यमान आह—**पौत्रे**त्यादि । अप्रकाशं गूढं । वैरं विरोधः । तस्मात् पूर्वसिद्धाद् वैराद् यज्ञानागमनापराधाच्च हेतोः । गोग्रहणं गोग्रहणरूपोऽपकारः । विराटो हि गोधनसंपन्नः प्रियगोधनश्चेति गोग्रहणं तस्यापकारो भवति ॥

**भो गाङ्गेये**त्यादि ॥

गोग्रहणमेव भवदिष्टसिद्धेरभ्युपाय इत्याशयवानाह—**ब्राह्मणे**ति । ब्राह्मण ! अत एव आर्जवबुद्धे ! आर्जवे ऋजुकर्मणि ऋजुत्वे वा बुद्धिर्यस्य तस्य सम्बुद्धिः । कपटानभिज्ञेत्यर्थः । इष्टसिद्ध्युपायाविमर्शिन्निति वा ।

**धर्षिता** इत्यादि । धर्षिताः अभिहतश्रोत्राः । रोषम् एष्यन्ति, रुष्टाश्चात्मानं पराक्रमेण प्रकाशयिष्यन्तीत्यभिप्रायः । विराटेऽपक्रियमाणे किमेषामिति चेत्, तत्राह—तेषां कृतज्ञत्वम् अस्ति । विराटभूम्युपजीवनजनितेन विराटविषयेण कृतज्ञत्वेन तच्छत्रुनिग्रहे यावच्छक्ति ते यतिष्यन्त एवेति भावः । एवञ्च यत् फलितं तदाह—इष्टं पाण्डवोपलम्भनरूपं । गोग्रहणे स्थितम् आयत्तम् । हितमिति पाठे आहितं न्यस्तमित्यर्थः । शब्देनेत्यस्य स्थाने घोषेणेति पाठान्तरम् ॥ ५५ ॥

**प्रविश्ये**त्यादि । नगरप्रवेशाभिमुखाय नगरप्रवेशे अवभृथानन्तरकरणीये हास्तिनपुरप्रवेशे अभिमुखाय । नगरेत्यस्य स्थाने 'वाह्याः' इति ग्रन्थान्तरे पाठः ॥

एभिरेव रथैः शीघ्रं क्रियतां तस्य गोग्रहः ।
गदा यज्ञप्रशान्ता च पुनर्मे करमेष्यति ॥ ५६ ॥

**द्रोणः** —

तस्मान्मे रथमानयन्तु पुरुषाः,

**शकुनिः** —

हस्ती ममानीयतां,

**कर्णः** —

भारार्थं भृशमुच्चतैरिह हयैर्युक्तो रथः स्थाप्यताम् ।

**भीष्मः** —

बुद्धिर्मे त्वरते विराटनगरं गन्तुं धनुस्त्वर्यतां

**सर्वे** —

मुक्त्वा चापमिहैव तिष्ठतु भवानाज्ञाविधेया वयम् ॥ ५७ ॥

**द्रोणः** — पुत्र ! दुर्योधन ! आवां तव युद्धे पराक्रमं द्रष्टुमिच्छावः ।

**दुर्योधनः** — यदभिरुचितं भवते ।

---

**एभिरेवे**त्यादि । एभिरेव अन्यार्थं सज्जीकृतैरेव, न तु विराटाभियानार्थं पार्थक्येन सज्जीकर्तव्यैरित्यर्थः । शीघ्रं क्रियतामिति क्रियाया अभ्युपगमनं त्वरणं च युद्धकामुकत्वप्रयुक्तम् । यज्ञप्रशान्ता यज्ञकाले व्यापाराभावाद् विश्रान्ता । गदा च गदा तु । पुनः पश्चात् प्रस्थानानन्तरकाले ॥ ५६ ॥

**तस्मादि**त्यादि । पुरुषाः कर्मकराः । भारार्थम् भारः युद्धे प्रदर्शनीयं महच्छूरकर्म, तदर्थम् । त्वर्यतां त्वरितमानीयताम् । इहैव हास्तिनपुर एव । तिष्ठतु विराटनगरं प्रति गमनं ते मा भूदित्यर्थः । आज्ञाविधेयाः किङ्कराः । भवतो भारं वोढुमस्मासु सन्नद्धेषु मास्तु ते विराटनगराभियानक्लेश इति तात्पर्यम् ॥ ५७ ॥

**पुत्रे**त्यादि । आवां भीष्मः अहं च । युद्धे गोग्रहणनिमित्ते । तव पराक्रमं शौर्यं । द्रष्टुम् इच्छावः, अत आवामपि त्वामनुगच्छात्र इत्यर्थः ॥

**यदि**त्यादि । भवते इत्यत्र 'रुच्यर्थानां प्रीयमाणः' (१–४–३३) इति सम्प्रदानत्वाच्चतुर्थी ॥

**द्रोणः** — वत्स ! गान्धारराज ! अस्मिन् गोग्रहणे तव खलु प्रथमरथः ।

**शकुनिः** — बाढम् । प्रथमः कल्पः ।

(निष्क्रान्ताः सर्वे ।)

**प्रथमोऽङ्कः ।**

---

**वत्सेत्यादि** । तव खलु प्रथमरथः तवैवाग्रिमो रथः तवैवास्मिन् गोग्रहणोद्योगे प्राधान्यमित्यर्थः । एतच्च प्रकृतिजिह्मस्य शकुनेर्विराटाभिषेणनप्रतिबन्धे बुद्धिर्मोत्पद्यतामित्येतदर्थं तत्पुरस्कारवचनम् ॥

**बाढमित्यादि** । प्रथमः मुख्यः ॥

**निष्क्रान्ताः सर्वे** इति प्रथमाङ्कपरिसमाप्तिः ॥

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति वृद्धगोपालकः ।)

**वृद्धगोपालकः** — (क) गावो मे अहीणवच्छा होन्तु । अविहवा अ गोवजुवदीओ होन्तु । णो ळाआ विळाडो एक्कच्छत्तप्पुहुवीपदी होदु । महाळाअष्ष विळाडष्ष वष्षवड्ढणगोप्पदाणणिमित्तं इमष्षिं णअळोववणवीहीए आअन्तुं गोधणं षव्वे अ किदमङ्गळामोदा गोवदाळआ दाळिआ अ दाव । एषु ज्जेष्ठं गच्छिअ अणुभविष्षम् । (विलोक्य) किण्णुहु एषो वाअषो षुक्खळुक्खं आळुहिअ षुक्खषाखाणिघट्टिअतुण्डं आदिच्चाहिमुहं विष्षळं विळवदि । षन्ती होदु षन्ती होदु अह्माणं गोधणष्ष अ । जाव एषु

---

(क) गावो मेऽहीनवत्सा भवन्तु । अविधवाश्च गोपयुवतयो भवन्तु । अस्माकं राजा विराट एकच्छत्रपृथिवीपतिर्भवतु । महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामागन्तुं गोधनं सर्वे च कृतमङ्गलामोदा गोपदारका दारिकाश्च तावत् । एषु ज्यैष्ठ्यं गत्वानुभविष्यामि । किंनुखल्वेष वायसः शुष्कवृक्षमारुह्य शुष्कशाखानिघट्टिततुण्डमादित्याभिमुखं

---

### अथ द्वितीयोऽङ्कः ।

अथ विराटनगरे गोग्रहणं, तद्वशाद् विराटसूनोरुत्तरस्य बृहन्नलासारथेः कौरवाणां च युद्धारम्भाः, कर्णादीनां पराजयः, विराटसूदेन भीमसेनेनाभिमन्योः कौरवानुयायिनो ग्रहणं, विराटाय ब्राह्मणवेषयुधिष्ठिरसहितायोत्तरेण बृहन्नलाया जयतत्त्वनिवेदनम्, अर्जुनेन युधिष्ठिरभीमसेनयोस्तत्त्वाख्यानं, ततोऽर्जुनेन परितुष्टविराटदत्ताया उत्तरायाः स्वपुत्रार्थे प्रतिग्रहणं च द्वितीयाङ्के वस्तु । तत्र गोग्रहणविषयकौरवसंरम्भसूचनार्थमादौ प्रवेशकं रचयितुमौचित्याद् वृद्धगोपालकं प्रवेशयति— **ततः प्रविशतीत्यादि** ॥

**गावो** इत्यादि । अहीनवत्साः अहीना स्वस्तिमन्तः वत्सा यासां तास्तथाभूताः, अनपेतवत्सा वा । अविधवाः भर्तृमत्यः । एकच्छत्रपृथिवीपतिः एकं छत्रम् आधिपत्यचिह्नभूतं श्वेतातपत्रं यस्याः सा एकच्छत्रा एकस्वामिकेत्यर्थः । एकच्छत्रायाः पृथिव्याः पतिः सार्वभौम इति यावत् । वर्षवर्धनगोप्रदाननिमित्तं वर्षवर्धने वा-

ज्जेट्ठं गच्छिअ गोवदाळआणं दाळिआणं वाहळामि । (परिक्रम्य) अळे गोमित्तअ ! गोमित्तअ ! ।

(प्रविश्य)

**गोमित्रकः**—(क) मादुळ ! वन्दामि ।

**वृद्धगोपालकः**—(ख) षन्ती होदु षन्ती होदु अह्माअं गोधणष्ष अ । अळे गोमित्तअ! महाळाजष्ष विळाडश्श वष्षवड्ढणगोप्पदाणणिमित्तं इमष्षिं णअळोववणवीहीए आअन्तुं गोधणं षव्वे च किदमङ्गळामो-

---

विस्वरं विलपति । शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोधनस्य च । यावदेषु ज्यैष्ठ्यं गत्वा गोपदारकाणां दारिकाणां व्याहरामि । अरे गोमित्रक ! गोमित्रक ! ।

(क) मातुल ! वन्दे ।

(ख) शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोधनस्य च । अरे गोमित्रक ! महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्या-

---

र्षिकजन्मनक्षत्रमङ्गले यद् गोप्रदानं तद् निमित्तं प्रयोजकं यस्मिन् कर्मणि तद् यथा भवति तथा । आगमनक्रियाविशेषणमिदम् । आगन्तुं सज्जीकृतमिति शेषः । कृतमङ्गलामोदाः कृतं मङ्गलं नववस्त्राभरणधारणलक्षणम् आमोदः स्रक्चन्दनादिः प्रीतिर्वा यैस्ते तथाभूताः । दारिकाः गोपबालिकाः । एषु गोपदारिकादारकेषु मध्ये । ज्यैष्ठ्यं नायकत्वं प्राधान्यम् । 'दाव एषु जेट्ठं' इत्यस्य स्थाने 'जाव हेट्ठं तेषुं' इति ग्रन्थान्तरे पाठः । एवं चिन्तयन्नेवाग्रतो दुर्निमित्तमुपलभ्याह—किण्णुहु इत्यादि । वायसः काकः । शुष्कशाखानिघट्टिततुण्डं शुष्कायां शाखायां निघट्टितं नितरां घट्टनं प्राप्तं तुण्डं मुखं यस्मिन् कर्मणि तद् यथा भवति तथा । विस्वरं विकृतस्वरं विलपति शब्दायते । अस्य दुर्निमित्तस्य गोपगोधनानर्थसूचकतां मत्वा तच्छान्तिमाशास्ते—षन्ती इत्यादि । यावदित्यादि । यावद् व्याहरामि व्याहरिष्यामि शब्दापयिष्यामि । 'यावत्पुरानिपातयोः'—(३-३-४) इति भविष्यति लट् । गोपदारकाणामिति षष्ठी कर्मणः शेषत्वविवक्षया ॥

**मादुळेत्यादि** ॥

पुनःशान्त्याशंसनपूर्वं कर्तव्यमादिशति—**षन्तीत्यादि** ॥

दआ गोवदाळआ दाळिआ अ। अळे गोमित्तअ! गोवदाळआणं दाळिआणं वाहळ।

**गोमित्रकः**—(क) जं मादुळो आणवेदि। गोळक्खिणिए! घिदपिण्ड! षामिणि! वषभदत्त! कुम्भदत्त! महिषदत्त! आअच्छह आअच्छह सिग्घं।

(ततः प्रविशन्ति सर्वे।)

**सर्वे**—(ख) मादुळ! वन्दामो।

**वृद्धगोपालकः**—(ग) षन्ती होदु षन्ती होदु अह्माणं गोधणष्ष अ गोवदाळआणं दाळिआणं (अ)। महाळाअष्ष विळाडष्ष वष्षवड्ढण-गोप्पदाणणिमित्तं इमष्षिं णअळोववणवीहीए आअन्तुं गोधणं। तत्तअं वेळं गाअन्तो णच्चन्तो होम।

**सर्वे**—(घ) जं मादुळो आणवेदि। (सर्वे नृत्यन्ति।)

---

मागन्तुं गोधनं सर्वे च कृतमङ्गलामोदा गोपदारका दारिकाश्च। अरे गोमित्रक! गोपदारकाणां दारिकाणां व्याहर।

(क) यन्मातुल आज्ञापयति। गोरक्षिणिके! घृतपिण्ड! स्वामिनि! वृषभदत्त! कुम्भदत्त! महिषदत्त! आगच्छतागच्छत शीघ्रम्।

(ख) मातुल! वन्दामहे।

(ग) शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोधनस्य च गोपदारकाणां दारिकाणां च। महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामागन्तुं गोधनम्। तावतीं वेलां गायन्तो नृत्यन्तो भवामः।

(घ) यन्मातुल आज्ञापयति।

---

**जमित्यादि** ॥

**मादुळेत्यादि** ॥

**षन्तीत्यादि**। आगन्तुं सज्जीकृतमिति शेषः। तावतीं वेलां यावद् गोधनमिहागच्छति तावन्तं कालम्। अत्यन्तसंयोगे द्वितीया ॥

**जमित्यादि** ॥

**वृद्धगोपालकः** ---(क) हीही षुट्‌ठु णच्चिदम्, षुट्‌ठु गाइदं । जाव अहं पि णच्चेमि । (नृत्यति ।)

**सर्वे** --- (ख) हाहा मादुळ ! अदिमहन्तं ळेणुं उप्पदिदो ।

**वृद्धगोपालकः** --- (ग) ण हु ळेणुं एव्व, षंक्खुदुन्दुभिघोषं उप्पदिदो ।

**सर्वे** --- (घ) हाहा मादुळ ! दिवाचन्दप्पभापण्डुळजोवगुण्ठिदमण्डळुं षुय्यो अत्थि अ णत्थि अ ।

**गोमित्रकः** --- (ङ) हाहा मादुळ ! एदे के वि मणुष्षा दहिपिण्डपण्डरेहि छत्तेहि घोडअषअडिअं आळुहिअ षव्वं घोषुं विद्दवन्ति चोळा ।

---

(क) हीही सुष्ठु नर्तितं, सुष्ठु गीतम् । यावदहमपि नृत्यामि ।

(ख) हाहा मातुल ! अतिमहान् रेणुरुत्पतितः ।

(ग) न खलु रेणुरेव, शङ्खदुन्दुभिघोष उत्पतितः ।

(घ) हाहा मातुल ! दिवाचन्द्रप्रभापाण्डुरजोवगुण्ठितमण्डलः सूर्योऽस्ति च नास्ति च ।

(ङ) हाहा मातुल ! एते केऽपि मनुष्या दधिपिण्डपाण्डरैश्छत्रैर्घोटकशकटिकामारुह्य सर्वं घोषं विद्रवन्ति चोराः ।

---

हीहीत्यादि । हीशब्दो विस्मये । स च सुष्ठुगाननर्तनज[illegible] ॥

अथ विराटनगरं प्राप्तानां कौरवाणां गोपालाभिमुखम[illegible]पानमन्यच्च चेष्टितं दर्शनक्रमेण वक्तुमुपक्रमः । तत्र सैन्यरजस्समुद्गमं प्रथमं पुरोपश्यन्तामुक्तिः---हाहे-त्यादि । हाहेति कष्टे ॥

णहु इत्यादि । न खलु रेणुरेव रजः केवलं नोत्पतितमित्यर्थः ॥

हाहामादुळेत्यादि । दिवाचन्द्रप्रभापाण्डुरजोवगुण्ठितमण्डलः दिवाचन्द्रस्य प्रभेव पाण्डु धवलं यद् रजः धूलिः तेन अवगुण्ठित आच्छन्नः मण्डलो यस्य स तथाभूतः । इह 'पण्डुळजोह्लावगुण्ठिदो षुदमण्डळुं' इति ग्रन्थान्तरे पाठो न हृद्यः । सूर्यः अस्ति च नास्ति च विरलरजसि क्वचिदाकाशस्य देशे लक्ष्यो भवति, सान्द्ररजसि क्वचिदलक्ष्यो भवतीत्यर्थः ॥

हाहेत्यादि । दधिपिण्डपाण्डुरैः दधिघनधवलैः । घोटकशकटिकाम् अश्व-शकटम् । घोषं गोपालपल्लीम् ॥

**वृद्धगोपालकः**—(क) हीही षरषंपादा उट्ठिदा । दारआ ! दालिआ ! षिग्घं पक्कणं पविषह ।

**सर्वे**—(ख) जं मादुळो आणवेदि । (निष्क्रान्ताः ।)

**वृद्धगोपालकः**—(ग) हाहा चिट्ठह चिट्ठह । पहरह पहरह । गह्णह गह्णह । इमं वुत्तन्तं महाळाअविळाडश्श णिवेदइष्षामो ।

(निष्क्रान्तः ।)

**प्रवेशकः ।**

---

( ततः प्रविशति भटः । )

**भटः**—भो भो निवेद्यतां निवेद्यतां महाराजाय विराटेश्वराय—एता हि दस्युकर्मप्रच्छन्नविक्रमैर्धार्तराष्ट्रैर्ह्रियन्ते गाव इति । तत्र हि,

---

(क) हीही शरसंपाता उत्थिताः । दारकाः ! दारिकाः ! शीघ्रं पक्कणं प्रविशत ।

(ख) यन्मातुल आज्ञापयति ।

(ग) हाहा तिष्ठत तिष्ठत । प्रहरत प्रहरत । गृह्णीत गृह्णीत । इमं वृत्तान्तं महाराज[illegible]ाय निवेदयिष्यामः ।

---

**हीहीत्य**[illegible]**ब्दो** विषादे । उत्थिताः अर्थाच्चौरेभ्यः । पक्कणम् आलयम् । यद्यपि पक्कणः श[illegible]लयः, तथापि शबरसम्बन्धस्यात्राविवक्षा । अवरजातिगृहत्वसाम्याद् गोपालगृहे शबरगृहत्वारोपो वा ॥

**जमित्यादि** ॥

**हाहेत्यादि** । इह गोधनं प्रहरणग्रहणक्रिययोः कर्म गम्यम् ॥

**प्रवेशक** इति । नीचपात्रप्रयोजितत्वात् ॥

अथ वृद्धगोपालमुखाद् विदितवृत्तान्तस्य भटस्य प्रवेशः—**तत** इत्यादि । **दस्युकर्मप्रच्छन्नविक्रमैः** दस्युकर्म चोरकर्म गोहरणं विराटाविदितमारभ्यमाणं, तेन **प्रच्छन्नविक्रमैः** । विवृतविक्रमत्वे विराटराजसमक्षं तदारब्धुमुचितमित्यर्थः । **धार्तराष्ट्रैः** धृतराष्ट्रपुत्रैः दुर्योधनादिभिः ।

द्रुतैश्च वत्सैर्व्यथितैश्च गोगणैर्निरीक्षणत्रस्तमुखैश्च गोवृषैः ।
कृतार्तनादाकुलितं समन्ततो गवां कुलं शोच्यमिहाकुलाकुलम् ॥ १ ॥

इति ।

(नेपथ्ये)

किं धार्तराष्ट्रैरिति ।

भटः — आर्य ! अथकिम् ।

(प्रविश्य)

काञ्चुकीयः — सदृशमेतद् भ्रातृजनेष्वपि द्रोहिणाम् । एते हि,

सज्जैश्चापैर्बद्धगोधाङ्गुलित्रा वर्मच्छन्नाः कल्पितस्यन्दनस्थाः ।
वीर्योत्सिक्ता युद्धसज्जाः कृतास्त्रा राज्ञो वैरं गोषु निर्यातयन्ति ॥ २ ॥

जयसेन ! जन्मनक्षत्रक्रियाव्यापृतस्य महाराजस्य तावदकालनिवेदनं मन्युमुत्पादयति । तस्मात् पुण्याहावसाने निवेदयिष्ये ।

---

द्रुतैरित्यादि । गवां कुलं गोत्वजातिविशिष्टानां पशूनां वृन्दं वत्सधेनुवृषभसमवायात्मकम् । आकुलाकुलम् अत्यन्तोद्विग्नम् ॥ १ ॥

नेपथ्य इति । नेपथ्यगतस्य रङ्गमप्रविष्टस्योक्तिरित्यर्थः ।

किमित्यादि । अत्र उच्यत इति शेषः ॥

आर्येत्यादि । अत्र 'अथकिं धार्तराष्ट्रैः' इति ग्रन्थान्तरे पाठः ॥

काञ्चुकीय इत्यादि । काञ्चुकीयः कञ्चुकी, येन नेपथ्ये व्याहृतं सोऽयम् । कञ्चुकशब्दान्निर्वृत्तार्थे छणि काञ्चुकीयशब्दः । एतद् गवां हरणं । भ्रातृजनेष्वपि अपिशब्दो द्रोहायोग्यत्वद्योतकः ।

सज्जैरित्यादि । सज्जैः आरोपितज्यैः । उपलक्षणे तृतीया । बद्धगोधाङ्गुलित्राः गोधा ज्याघातवारणं अङ्गुलित्रम् अङ्गुलित्राणं च बद्धं यैस्ते तथाभूताः । 'गोधा तला च न नरौ हस्तघ्नो ज्यानिवारणे' इति यादवः । कल्पितस्यन्दनस्थाः कल्पितेषु उपकरणवत्तया सज्जितेषु रथेषु तिष्ठन्तीति तथाभूताः । राज्ञः विराटस्य । निर्यातयन्ति प्रतिकुर्वन्ति । एतेन निर्लज्जत्वं धार्तराष्ट्राणामुक्तम् ॥ २ ॥

जयसेनेत्यादि । मन्युं कोपं । पुण्याहावसाने पुण्यमहः पुण्याहं पुण्यदिनकार्यं स्वस्तिवाचनाख्यं माङ्गलिककर्म तस्यावसाने समाप्तौ ॥

**भटः** — आर्य अतिपाति कार्यमिदं, शीघ्रं निवेद्यताम् ।

**काञ्चुकीयः** — इदं निवेद्यते ।

(ततः प्रविशति राजा ।)

**राजा**—

मा तावद् व्यथितविकीर्णबालवत्सा गावो मे रथरवशङ्कया ह्रियन्ते ।
पीनांसश्चलवलयः सचन्दनार्द्रो निर्लज्जो मम च करः कराणि भुङ्क्ते ॥

जयसेन ! जयसेन !

(प्रविश्य)

**भटः** — जयतु जयतु महाराजः ।

**राजा** — अलं महाराजशब्देन । अवधूतं मे क्षत्रियत्वम् । उच्यतां रणविस्तरः ।

**भटः** — महाराज ! न विस्तरार्हाणि विप्रियाणि । एष समासः,

---

**आर्येत्यादि** । अतिपाति विलम्बासहम् ॥

**इदमित्यादि** ॥

**तत** इत्यादि ।

**मेति** । मातावदिति गर्हायाम् । सा च वक्ष्यमाणस्वीयनिर्लज्जव्यापारविषया । रथरवशङ्कया रथध्वनिभिया । व्यथितविकीर्णबालवत्साः व्यथिता उद्विग्नाः विकीर्णाः तत इतो विक्षिप्ताः बालवत्साः, अथवा विकीर्णबालाः विक्षिप्तपुच्छाः वत्साः यासां तास्तथाभूताः । मे गावः ह्रियन्ते अर्थाद् दस्युभिः । पीनांसः मांसलस्कन्धः । चलवलयः चञ्चलकटकः । सचन्दनार्द्रः सचन्दनः अत एवार्द्रः । मम करश्च पाणिस्तु । निर्लज्जः सन् , कराणि अन्नविशेषान् । "भिस्सा स्त्री दीदिविर्न ष्ण् । पुन्नपुंसकयोश्चोरं करमाहार्यमित्यपि ।" इति वैजयन्ती । भुङ्क्ते । तदिदं गर्हितं कर्मेति मातावदिति निषेधेन द्योत्यते ॥ ३ ॥

**जयत्वित्यादि** ॥

**अलमित्यादि** । अवधूतं निरस्तम् ॥

**महाराजेत्यादि** । न विस्तरार्हाणि न प्रपञ्चनीयानि । **एषः** वक्ष्यमाणः । **समासः** निवेद्यवस्तुसंक्षेपः ।

एकवर्णेषु गात्रेषु गवां स्यन्दनरेणुना ।
कशापातेषु दृश्यन्ते नानावर्णविभक्तयः ॥ ४ ॥

**राजा** — तेन हि,

धनुरुपनय शीघ्रं कल्प्यतां स्यन्दनो मे
मम गतिमनुयातुच्छन्दतो यस्य भक्तिः ।
रणशिरसि गवार्थे नास्ति मोघः प्रयत्नो
निधनमपि यशः स्यान्मोक्षयित्वा तु धर्मः ॥ ५ ॥

**भटः** — यदाज्ञापयति महाराजः । (निष्क्रान्तः ।)

**राजा** — भोः ! किन्नुखलु दुर्योधनस्य मामन्तरेण वैरम् । आ यज्ञमनुभवितुमनागत इति । कथमनुभवामि । कीचकानां विनाशेन वयमुन्नीतसन्तापाः संवृत्ताः । अथवा परोक्षमपि पाण्डवानां स्निग्ध इति । सर्वथा योद्धव्यम् । हास्तिनपुरनिवासाच्छीलज्ञो भगवान् दुर्योधनस्य । अथवा,

---

**एकेति** । गवां गात्रेषु अङ्गेषु । स्यन्दनरेणुना रथरजसा हेतुना । एकवर्णेषु रजोरूपेण सहजशुक्लत्वादितत्तद्वर्णानिह्नवात् कपिशत्वरूपमेकमेव रजोवर्णमविशेषात् प्राप्तेषु । गवां, गात्रेषु अङ्गेषु । कशापातेषु प्रतोदाभिघातस्थानेषु । नानावर्णविभक्तयः नानावर्णानां स्वतस्सिद्धानां शुक्लनीलादिवर्णानां विभक्तयः विभागरेखाः। दृश्यन्ते । एतेन रथिनां बाहुल्यं गोविषयः कशाभिघातद्रोहश्च प्रकाशितः ॥ ४ ॥

**तेन हि धनुरित्यादि** । कल्प्यतां सज्जीक्रियताम् । अनुयातु अनुगच्छतु । स इति कर्तुराक्षेपः, यस्य भक्तिरिति यत्पदनिर्देशात् । रणशिरसि युद्धान्ते । मोघो नास्ति व्यर्थो न भवति । प्रयोजनमाह—निधनं मरणमपि । यशः कीर्त्तिकरं स्यात् । मोक्षयित्वा तु गाः शत्रुहस्तान्मोचयित्वा पुनः । धर्मः गोरक्षणरूपः, लभ्यत इति शेषः ॥ ५ ॥

**यदित्यादि** ॥

**भो इत्यादि** । माम् अन्तरेण माम् उद्दिश्य । आ इति वैरकारणस्य स्मरणं द्योतयति । उन्नीतसन्तापाः उन्नीत उपचितः सन्तापो येषां ते तथाभूताः संवृत्ताः । 'उपनीतसन्तापा' इति ग्रन्थान्तरे पाठः । वैरस्य कारणान्तरमप्यूहते— **अथवेत्यादि** । पाण्डवानां, परोक्षम् अप्रत्यक्षं । स्निग्धोऽपीति, प्रत्यक्षं भार्तराष्ट्रेष्वपि-

कामं दुर्योधनस्यैष न दोषमभिधास्यति ।
अर्थित्वादपरिश्रान्तः पृच्छत्येव हि कार्यवान् ॥ ६ ॥

कोऽत्र ।

(प्रविश्य)

**भटः**——जयतु महाराजः ।

**राजा**——भगवांस्तावदाहूयताम् ।

**भटः**——यदाज्ञापयति महाराजः । (निष्क्रान्तः । )

(ततः प्रविशति भगवान् ।)

**भगवान्**——(सर्वतो विलोक्य) भोः! किन्नुखल्विदम् ।

गजेन्द्राः कल्प्यन्ते तुरगपतयो वर्मरचिता
रथाः सानूकर्षाः कृतपरिकरा योधपुरुषाः ।

---

रुद्धं व्यवहरन्नपि प्रच्छन्नं पाण्डवेषु स्निग्धं व्यवहरामीत्येतदपि वैरस्य कारणं स्यादित्यर्थः । भगवान् कपटमस्करिवेषेण विराटपार्श्वे वसन् धर्मपुत्रः । हास्तिनपुरनिवासाद् भूतपूर्वात् । स च भगवन्मुखादेव विराटेन विदितचर इत्यूह्यम् । शीलज्ञः वृत्तज्ञः बलाबलज्ञ इत्यर्थः । अतस्तं पृष्ट्वा प्रत्यभियोज्यस्य शीलं ज्ञास्यामीत्यभिप्रायः ।

पृष्टो भगवान् कल्याणबुद्धित्वात् परस्य दोषं न कथयिष्यतीति शङ्कते——**अथवा काममित्यादि** । कामं यद्यपि । दोषं रन्ध्रं पराजयस्थानम् । कार्यवता मया सोऽकथयन्नपि भूयो भूयः प्रष्टव्य एवेत्याभिप्रायं सामान्यन्यायेन सूचयति——कार्यवान् साध्यवान् जनः । अर्थित्वात् कार्यसिद्ध्युपायप्रेप्सुत्वाद्धेतोः । अपरिश्रान्तः इष्टोत्तरागमनं यावदखिन्नः सन् । पृच्छत्येव, न तु प्रश्नवैफल्यभिया तूष्णीमास्ते इत्यर्थः । हिः प्रसिद्धौ, ईदृशो हि लोकसमुदाचार इत्यर्थः । अप्रस्तुतप्रशंसालङ्कारः ॥ ६ ॥

**जयत्वित्यादि** ॥

**भगवानित्यादि** ॥

**यदित्यादि** ॥

**तत इत्यादि** । भो इति विषादे । इदं वक्ष्यमाणम् ।

**गजेन्द्रा** इति । गजेन्द्राः गजश्रेष्ठाः । कल्प्यन्ते सज्जीक्रियन्ते, युद्धार्हवेषसम्पादनमिह कल्पना । तुरगपतयः अश्वश्रेष्ठाः सादिनो वा । **वर्मरचिताः**

समुद्योगं दृष्ट्वा भयमननुभूतं स्पृशति मां
न खल्वात्मन्यस्तं कृतमतिरहं ते तु चपलाः ॥ ७ ॥

(उपगम्य) जयतु भवान् जयतु ।

**राजा** — विराटो भगवन् ! अभिवादये ।

**भगवान्** — स्वस्ति ।

**राजा** — अनुगृहीतोऽस्मि । भगवन् ! एतदासनम् । आस्यताम् ।

**भगवान्** — बाढम् । (उपविश्य) भो राजन् !

उद्योगः प्रस्तुतः कस्माच्छ्रीर्न सन्तोषमिच्छति ।
पीडयिष्यति सोत्सेकान् पीडितान् मोक्षयिष्यति ॥ ८ ॥

---

कवचिताः । भवन्तीति शेषः । रथाः, सानूकर्षाः अनूकर्षोऽनुकर्षाख्यं रथस्याधोधरणदारु, 'उपसर्गस्य—'(६-३-१२२) इति दीर्घः । तेन सहिताः । योधपुरुषाः युद्धभटाः । कृतपरिकराः कृतसन्नाहाः । समुद्योगम् उक्तं युद्धोद्यमं । दृष्ट्वा, अननुभूतं, भयं, मां स्पृशति युद्धकालावश्यकरणीये विराटसाहाय्येऽस्माभिः क्रियमाणे अज्ञातवासविपरीतमस्माकमात्मप्रकाशनं कथमपि स्यादित्येवंरूपं भयं मे जायत इति भावः । तर्हि साहाय्यकरणदशायामपि धैर्यमवलम्ब्यात्मा निह्नूयतामिति चेत्, तदेतन्मम सुकरं न तु मद्भ्रातॄणामित्यभिप्रायेणाह — आत्मन्यस्तम् आत्मगतम् आत्मविषयकम् । अर्थाद् भयं, न खलु नैव विद्यते अहमात्मानं यत्नान्निह्नुवीयैवेत्यर्थः । कुतस्तत्राह—अहं कृतमतिः निश्चितबुद्धिः धीर इत्यर्थः । तु किन्तु, ते वक्तृवाच्यादिवैशिष्ट्याद् भीमादयो मद्भ्रातर इत्यर्थः । चपला अधीराः । अतस्ते युद्धकण्डूलत्वात् कदाचिदतिपराक्रमप्रदर्शनेन स्वात्मानं प्रकाशयेयुरिति तन्निमित्तं मे भयमस्तीति भावः । एवं वदता युधिष्ठिरेणाज्ञातवासवर्षपूर्तिर्जातापि प्रमादान्न स्मृतेदानीमिति बोद्धव्यम् । भीष्मसम्प्राप्तिप्रयोजनपर्यालोचनवशात्तु सा पश्चात् स्मरिष्यते 'किमर्थं खलु सम्प्राप्तः' (श्लो० १२) इत्यादि वदता ॥ ७ ॥

**विराट** इत्यादि ॥

**स्वस्तीति** मङ्गलाशंसनम् ॥

**अन्वित्यादि** ॥

**बाढमित्यादि** । बाढमित्यङ्गीकारे ।

**उद्योग इति** । कस्मात् केन हेतुना । उद्योगः, प्रस्तुतः प्रक्रान्तः । तत्र

**राजा** — भगवन्! गोग्रहणादवमानितोऽस्मि।

**भगवान्** — केन कारणेन।

**राजा** — धार्तराष्ट्रैः।

**भगवान्** — धार्तराष्ट्रैरिति। (आत्मगतम्) भोः! कष्टम्,

एकोदकत्वं खलु नाम लोके मनस्विनां कम्पयते मनांसि।
वैरप्रियैस्तैर्हि कृतेऽपराधे यत्सत्यमस्माभिरिवापराद्धम्॥ ९॥

**राजा** — भगवन्! किमिदानीं विचार्यते।

---

त्रीन् सम्भाव्यमानान् हेतूनुल्लिख्य पृच्छति—श्रीः राज्यलक्ष्मीः। सन्तोषं तृप्तिं। नेच्छति। भूयो वृद्धिमिच्छन्ती नवनवराज्यसाधनाय त्वां प्रोत्साहयति किमित्यर्थः। 'नहि नहि महिमानं प्राप्य तृप्यन्ति भूपाः' इति हि न्याय इति भावः। सोत्सेकान् गर्वितान्। पीडयिष्यति दमयिष्यति किम्। पीडितान् शत्रुणा केनापि अवरुद्धान्। मोक्षयिष्यति किम्। अत्र सर्वत्र प्रश्नकाकुः॥ ८॥

**भगवन्नित्यादि**॥

**केनेति**। केन कारणेन निमित्तेन कर्त्रेत्यर्थः। मातृकान्तरे तु 'कारणेन' इति न पठ्यते॥

**धार्तराष्ट्रैरिति**। दुर्योधनादिभिः॥

ज्ञातिकृतस्य गोग्रहणापराधस्य श्रवणेन लज्जित आत्मनि चिन्तयति— **आत्मगतमित्यादि**।

**एकोदकत्वमिति**। लोके, एकोदकत्वं ज्ञातित्वं खलु, अर्थाद् अनार्यजनगतं तथाविधस्यैव कम्पनकर्तृत्वौचित्यात्। मनस्विनां सुशिक्षितहृदयानाम् आर्याणां तज्ज्ञातीनामित्यर्थः। मनांसि, कम्पयते उद्वेजयति दुनोति वा। अस्य सामान्यन्यायस्य समर्थकं प्रकृतमर्थमाह—हि यतः। वैरप्रियैः, तैः अस्मद्ज्ञातिभिर्धार्तराष्ट्रैः। अपराधे निर्दोषविराटगोधनापहाररूपे। कृते सति। अस्माभिः, अपराद्धमिव अपराधः कृत इत्यध्यवस्यामि। इवशब्द इहाध्यवसायार्थः। यत्सत्यमिति वाक्यसत्यत्वावधारणे, तदिदमात्मन्यपराधित्वाध्यवसानवचनं सत्यमेवेत्यर्थः॥ ९॥

**भगवन्नित्यादि**। किं विचार्यते चिन्त्यते भवता, न तु प्रकृतानुगुणं किञ्चिदुच्यत इत्यर्थः॥

**भगवान्** — न खलु किञ्चित् । तेषामुत्सुकः ।

**राजा** — अद्यप्रभृति निभृता भविष्यन्ति । यदि शक्तोऽपि युधिष्ठिरो मर्षयति, अहं न मर्षयामि ।

**भगवान्** — एवमेतत् । (आत्मगतम्)

अद्येदानीं पर्णशय्या च भूमौ राज्यभ्रंशो द्रौपदीधर्षणं वा ।
वेषान्यत्वं संश्रितानां निवासः सर्वं श्लाघ्यं यत् क्षमा ज्ञायते मे ॥ १० ॥

(प्रविश्य)

**भटः** — जयतु महाराजः ।

**राजा** — अथ किं चेष्टते दुर्योधनः ।

**भटः** — न खलु दुर्योधन एव, पृथिव्यां राजानः सर्वे प्राप्ताः ।

---

**नेति** । न खलु किञ्चिद् अप्रकृतं न किञ्चिच्चिन्त्यते, किन्तु प्रकृतमेवेत्यर्थः । किं प्रकृतं, तदाह—तेषाम् उत्सुकः तेषु विषये दुःखितोऽहम् । दुश्चेष्टमानेषु धार्तराष्ट्रेषु कारुण्याद् विषीदामीत्यर्थः ॥

**अद्येत्यादि** । निभृताः निश्चेष्टाः शान्तावलेपा इत्यर्थः । सद्य एव तान् दमयिष्यामीति भावः । मर्षयति यदि तितिक्षते चेत्, तान् सापराधानित्यार्थम् ॥

**एवमेत**दिति ।

**अद्येदानीमि**त्यादि । अत्र प्रथमपादो नवमवर्णविकल एव मातृकायां क्वचिद् दृश्यते । तत्र नवमवर्णं विशब्दं प्रक्षेप्तुमुचितं मन्यामहे । विभूमौ विरुद्धायां शयनानर्हायां वनभूमावित्यर्थः । मातृकान्तरे तु नवमवर्णः चशब्द एव पठ्यते । द्रौपदीधर्षणं द्रौपद्यवमाननं । वेषान्यत्वं रूपभेदं मस्कारिसूदषण्डमन्दुरापतिगवाधिकृतसैरन्ध्रीलक्षणम् । सर्वम् उक्तम् अनुक्तं चास्माभिरनुभूतमखिलं क्लेशजातमित्यर्थः । श्लाघ्यमित्यत्र अद्येदानीमिति सम्बध्यते, अद्यैव इदानीमेव 'शक्तोऽपि युधिष्ठिरो मर्षयती'ति विराटवाक्यश्रवणसमय एव न तु प्रागित्यर्थः । श्लाघ्यं श्लाघार्हं । जातमिति शेषः । तत्र कारणमाह—यत् यस्मात् कारणात् । मे क्षमा, ज्ञायते, अर्थात् विराटप्रभृतिना साधुलोकेन ॥ १० ॥

**जयत्वि**त्यादि ॥

**अथे**त्यादि ॥

**न खल्वि**त्यादि ।

द्रोणश्च भीष्मश्च जयद्रथश्च शल्योऽङ्गराजः शकुनिः कृपश्च ।
तेषां रथोत्कम्पचलत्पताकैर्भग्ना ध्वजैरेव वयं न बाणैः ॥ ११ ॥

**राजा** —(उत्थाय कृताञ्जलिः) कथं तत्रभवान् गाङ्गेयोऽपि प्राप्तः ।

**भगवान्** —(आत्मगतम्) साधु धर्षितेनापि नातिक्रान्तः समुदाचारः । भोः !

किमर्थं खलु सम्प्राप्तः कुरूणां गुरुरुत्तमः ।
शङ्के तीर्णा प्रतिज्ञेति स्मारणं क्रियते मम ॥ १२ ॥

**राजा** —कोऽत्र ।

(प्रविश्य)

**भटः** —जयतु महाराजः ।

---

प्राप्तानाह—**द्रोणश्चे**त्यादि । रथोत्कम्पचलत्पताकैः रथानामुत्कम्पेन उच्चलनेन चलन्त्यः पताकाः केतुपटाः येषां तैस्तथाभूतैः । ध्वजैरेव, भग्नाः, ध्वजदर्शनमात्रमपि तावदस्माकं परिभवावहमित्यर्थः । बाणैः न भग्नाः बाणपातनं तु अद्यापि तैर्नारब्धमिति भावः ॥ ११ ॥

**उत्थाये**त्यादि । अमर्षकालेऽपि पूज्यपूजाया अव्यतिक्रमोऽनेन सूचितः ॥

**साध्वि**त्यादि । साधु युक्तम् । अर्थात् समुदाचारानतिक्रमणम् । समुदाचारः उचिताचरणम् ।

**किमर्थ**मिति । कुरूणां कुरुवंश्यानाम् । उत्तमो गुरुः पितामहो भीष्मः । किमर्थं कस्मै प्रयोजनाय संप्राप्तः । गोग्रहणं तु भीष्मसंप्राप्तेः प्रयोजनं न भवितुमर्हत्यनार्यकर्मत्वादित्यभिप्रायः । प्रयोजनमूहते—प्रतिज्ञा तीर्णा अज्ञातवाससंवित् सम्यगनुष्ठानेन परिसमापिता, अज्ञातवासवर्षे नैकोऽपि दिवसोऽतिवाह्यतयेदानीं परिशिष्यत इत्यर्थः । इति एवं । मम, स्मारणम् अभिज्ञापनं । क्रियते, अर्थाद् गुरुणा । स्मारणं हि अस्मद्वत्सलेन, भीमसेने कीचकवधकर्तृत्वबुद्ध्या विराटनगरेऽस्मदज्ञातवासमनुमिलवता, पितामहेन मम पाक्षिकास्मरणपरिहारायावश्यं कर्तुमुचितं; स्मरणं चास्मदुपजाव्यीवरीटद्रोहिष्वस्माकमात्मप्रकाशनभयत्यागेन प्रतापाविष्करणार्थमवश्यमपेक्षितमिति भावः । शङ्के इत्थं मे तर्कः ॥ १२ ॥

**कोऽत्रे**ति ॥

**जयत्वि**त्यादि ॥

**राजा** — सूतस्तावदाहूयताम् ।

**भटः** — यदाज्ञापयति महाराजः । (निष्क्रान्तः ।)

(प्रविश्य)

**सूतः** — जयत्वायुष्मान् ।

**राजा** —

रथमानय शीघ्रं मे श्लाघ्यः प्राप्तो रणातिथिः ।
तोषयिष्ये शरैर्भीष्मं जेष्यामीत्यमनोरथः ॥ १३ ॥

**सूतः** — यदाज्ञापयत्यायुष्मान् । आयुष्मन् !

रिपूणां सैन्यभेदेषु यस्ते परिचितो रथः ।
रथचर्यां बहिष्कर्तुं तमास्थायोत्तरो गतः ॥ १४ ॥

**राजा** — कथं निर्यातः कुमारः ।

**भगवान्** — भो राजन् ! संवार्यतां संवार्यतां कुमारः ।

अगणितगुणदोषो युद्धतीक्ष्णश्च बाल्या-
न्न च दहति न कश्चित् सन्निकृष्टो रणाग्निः ।

---

**सूत** इत्यादि ॥

**यदि**त्यादि ॥

**जयत्वि**त्यादि । आयुष्मानिति सूतस्य राजानं प्रति समुदाचारः ॥

**रथमि**त्यादि । रणातिथिः रणेन तर्पणीयोऽतिथिः । भीष्मं, शरैः मदीयधनुर्मुक्तैर्बाणैः ; तोषयिष्ये प्रीणयिष्यामि, रणातिथिर्हि कथञ्चित् तोषणीय इति कृत्वा; न तु जेष्यामीत्यर्थः । तज्जयो हि मनोरथस्याप्यविषय इत्याह—जेष्यामीत्यादिना ॥ १३ ॥

**यदि**त्यादि ।

**रिपूणामि**त्यादि । सैन्यभेदेषु सैन्यव्यूहविदारणेषु । परिचितः शिक्षितचर्यः न तु दर्शितचर्य इत्यर्थः । अत एवाह—रथचर्यां बहिष्कर्तुम् अभ्यस्तां रथचर्यां युद्धरङ्गे प्रकाशयितुमित्यर्थः ॥ १४ ॥

**कथमि**त्यादि ॥

**भो राजन्निति** । संवार्यतामित्यादि श्लोकान्वयि ।

अथच परिहरन्ते धार्तराष्ट्रा न किञ्चि-
न्न खलु परिभवात् ते युद्धदोषान् ब्रवीमि ॥ १५ ॥

**राजा** — तेन हि शीघ्रमन्यो रथः कल्प्यताम् ।

**सूतः** — यदाज्ञापयत्यायुष्मान् ।

**राजा** — अथवा एहि तावत् ।

**सूतः** — आयुष्मन्! अयमस्मि ।

**राजा** —

त्वमिदानीं कुमारस्य किं न वाहितवान् रथम् ।
अनुज्ञातोऽसि किं तेन न राज्ञां सारथिर्भवान् ॥ १६ ॥

---

**अगणिते**ति । बाल्याद् अगणितगुणदोषः अगणितौ अचिन्तितौ गुणदोषौ युद्धसम्भावितौ येन स तथाभूतः । युद्धतीक्ष्णः युद्धे तीक्ष्णः आत्मत्यागी च । कुमारः युवराज उत्तरः । संवार्यतां सम्यङ् निवर्त्यतां, युद्धात् । सन्निकृष्टः सन्निहितः । कश्चित् रणाग्निः । न च न दहति दहत्येव । जनमुपस्थितमिति कर्म गम्यम् । कञ्चिदिति वा पाठः । बालमबालं वा कञ्चिदप्यदहन्न मुञ्चतीत्यर्थः । रणस्वभावमुक्त्वा प्राप्तशत्रुस्वभावमाह—अथच किञ्च । धार्तराष्ट्राः, किञ्चित् किमपि । न परिहरन्ते नोपेक्षन्ते, सर्वविधमपि प्रत्यनीकमविशेषान्मारयन्तीति भावः । युद्धदोषान् प्रकृतयुद्धसम्भावितान् अनर्थान् । परिभवात् ते न खलु ब्रवीमि परिभवं त्वत्पुत्रावमाननमभिसन्धाय तुभ्यं नैव वच्मि, किन्तु त्वद्विप्रयात् सौहार्दाद् वच्मीत्यर्थः । परिभवादिति ल्यब्लोपे पञ्चमी । 'तीक्ष्णा त्रिर्निशितोष्णयोः । आत्मत्यजि च' इति केशवः ॥ १५ ॥

**तेन ही**त्यादि । कल्प्यतां सज्जीक्रियतां । तमधिरुह्याहमेव युद्धार्थे यास्यामि उत्तरं च वारयिष्यामीत्यभिप्रायः ॥

**यदि**त्यादि ॥

गन्तुं प्रवृत्ते सूते जिज्ञासितमन्यत् प्रष्टुकामस्तमाह्वयति—**अथवे**त्यादि ॥

**आयुष्मन्नि**त्यादि ॥

पृच्छति—**त्वमि**त्यादि । किं न वाहितवान् न प्राजितवान् । त्वया हि निपुणेनेदृशेऽवसरे रथो वाहयितव्य इत्याभिप्रायः । अवाहनं ते किं कुमारानुज्ञाकृतम्, आहोस्वित् स्वेच्छाकृतमिति पृच्छति—**अनुज्ञात इ**त्यादि । **अनुज्ञातः** 'मम

**सूतः** — प्रसीदत्वायुष्मान्। रथं संकल्पयित्वा तु सूतसमुदाचारेणोपस्थितः खल्वहम्। कुमारेण,

किन्नु तत् परिहासार्थं किन्नु तत्रास्ति कौशलम्।
मामतिक्रम्य सारथ्ये विनियुक्ता बृहन्नला ॥ १७ ॥

**राजा** — कथं बृहन्नलेति।

**भगवान्** — राजन्! अलमलं सम्भ्रमेण।

यदि स्वचक्रोद्धतरेणुदुर्दिनं रथं समास्थाय गता बृहन्नला।
परान् क्षणैर्नेमिरवैर्निवारयन् विनापि बाणान् रथ एव जेष्यति ॥ १८ ॥

---

रथमन्यो वाहयतु, मा त्वं वाहये'ति दत्ताभ्यनुज्ञः। सारथिः न किं त्यक्तसारथ्याधिकारः किमित्यर्थः। एतेन स्वेच्छाकृतत्वमवाहनस्य पृष्टं भवति ॥ १६ ॥

असारथित्वप्रश्नसूचितकोपं राजानं प्रसादयन्नाह—**प्रसीदत्वित्यादि**। संकल्पयित्वा सम्यक् सज्जयित्वा। इह ल्यबकरणमार्षम्। कुमारेणेति श्लोकान्वयि। 'कुमारेण तु' इति ग्रन्थान्तरे पाठः।

**किन्न्विति**। कुमारेण, माम्, अतिक्रम्य परिहृत्य। बृहन्नला या विराटकन्याया उत्तरायास्तौर्यत्रिकाचार्या रूपान्तरमर्जुनस्य सा बृहन्नलाख्या षण्डप्रकृतिः। सारथ्ये सारथिकर्मणि। विनियुक्ता कल्पिता। तद् बृहन्नलासारथ्यविनियोजनं। परिहासार्थं किन्नु परिहासो बाललीला मत्सारथ्यविडम्बना वा, तदर्थं किन्नु। तत्र बृहन्नलायां। कौशलं सारथिकर्मविनियोजनक्षमं सामर्थ्यम् अस्ति किन्नु। अथवा तत्र सारथ्यविनियोजने विषये। कौशलं कुशलकर्म, इतरदुर्लक्ष्योऽभिसन्धिरिति यावत्। अर्थात् कुमारस्य। अस्ति किन्नु ॥ १७ ॥

**कथमित्यादि**। इतिशब्दादनन्तरम् 'आत्थे'ति पूरणीयम्। हन्त महान् प्रमादः कुमारस्येत्यभिप्रायः ॥

**राजन्नित्यादि**। सम्भ्रमेण आवेगेन।

**यदीत्यादि**। स्वचक्रोद्धतरेणुदुर्दिनं स्वचक्रैः उद्धतम् उत्थापितं रेणुदुर्दिनं पांसुवर्षं येन तं तथाभूतं। समास्थाय अधिष्ठाय। क्षणैः क्षणैरेव द्वित्रैः, न तु चिरकालापेक्षेत्यर्थः। 'क्षणाद्' इति मातृकान्तरे पाठः, एकेनैव क्षणेनेत्यर्थः। नेमिरवैः चक्रप्रान्तध्वनिभिः। बाणान् विनापि उत्तरबाणमोचनाभावेऽपि रथ एव यो

**राजा** — तेन हि शीघ्रमन्यो रथः कल्प्यताम् ।

**सूतः** — यदाज्ञापयत्यायुष्मान् । (निष्क्रान्तः ।)

(प्रविश्य)

**भटः** — भग्नः खलु कुमारस्य रथः ।

**राजा** — कथं भग्नो नाम ।

**भगवान्** — कथमिदानीं भग्नो नाम ।

**भटः** — श्रोतुमर्हति महाराजः ।

बहुभिः समराभिज्ञैराच्छिन्नाश्वपथः परैः ।
भग्नो गहनलोभेन श्मशानाभिमुखो रथः ॥ १९ ॥

---

बृहन्नलाधिष्ठितः स एव रथः । जेष्यति शत्रून् पराभविष्यति । एतेन बृहन्नलाया रथचर्यानिपुणत्वमाविष्कृतम् । "यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥" इत्यागमोऽप्यत्रानुसन्धातुमुचितः ॥१८॥

जिज्ञासितेऽर्थेऽवगते पूर्वाज्ञां स्मारयति—**तेन हीत्यादि** ॥

**यदित्यादि** ॥

स्वयं योद्धुकामया बृहन्नलया श्मशानगहनस्थापितनिजगाण्डीवाहरणाय युद्धभूमेर्निवर्त्य कुमारस्य रथे श्मशानगहनाभिमुखं वाहिते तत्त्वानभिज्ञतया तद्भङ्गं मन्यमानस्य भटस्य तद्वृत्तान्तानिवेदनार्थं प्रवेशः—**प्रविश्य भट** इत्यादि । भग्नः शत्रुभिः परिभूतः ॥

**कथमित्यादि** ॥

**कथमिदानीमित्यादि** ॥

**श्रोतुमित्यादि** ।

**बहुभिरिति** । बहुभिः, समराभिज्ञैः युद्धनिपुणैः । परैः शत्रुभिः । आच्छिन्नाश्वपथः आच्छिन्नः हठाक्रान्तः अश्वपथः अश्वगमनमार्गो यस्य स तथाभूतः । अत एव भग्नः युद्धभुवि प्रतिरुद्धगतिः प्राप्तपरिभवो वा । रथः, गहनलोभेन गहनस्य काननस्य लोभेन आशया । श्मशानाभिमुखः, जात इति शेषः, श्मशाने हि परिभूतभीरुनिलयनयोग्यं काननं सुलभमिति काननप्रत्याशया तत् प्रविष्ट इति भावः ॥ १९ ॥

**भगवान्**—(आत्मगतम्) आ अत्र खलु गाण्डीवम् । (प्रकाशम्) भो राजन्!

निमित्तं किञ्चिदुत्पन्नं श्मशानाभिमुखे रथे ।
धार्तराष्ट्राः स्थिता यत्र श्मशानं तद् भविष्यति ॥ २० ॥

**राजा**—भगवन्! अकाले स्वस्थवाक्यं मन्युमुत्पादयति ।

**भगवान्**—अलं मन्युना । कदाचिदनृतं नोक्तपूर्वम् ।

**राजा**—आ अस्त्येतत् । गच्छ भूयो ज्ञायतां वृत्तान्तः ।

**भटः**—यदाज्ञापयति महाराजः । (निष्क्रान्तः)

---

**आ** इत्यादि । आ इति स्मरणे । स्मरणविषयमाह—अत्र खलु श्मशान एव । गाण्डीवम् अर्जुनधनुः । वर्तत इति शेषः । एतेन रथस्य तदाभिमुख्यं गाण्डीवग्रहणार्थमिति सूचितम् ।

तदिदं वस्तुतत्त्वं मनसिकृत्य शुभनिमित्तोदयवाचोयुक्त्या विराटमाश्वासयति—**निमित्तमित्**यादि । निमित्तं भाविशुभसूचकं । भाविनं सूच्यार्थमाह—धार्तराष्ट्रा इत्यादि । तद् युद्धरङ्गं । श्मशानं प्रेतस्थानं । भविष्यति, उत्तरः शत्रून् प्रेतान् करिष्यतीत्ययमर्थो रथस्य श्मशानाभिमुखीभावेन सूच्यत इति स्वस्थो भवेति भावः ॥ २० ॥

**भगवन्निति** । अकाले स्वस्थवाक्यानर्हे काले, परमोद्वेगकाले इत्यर्थः । स्वस्थवाक्यं स्वस्थस्यानुद्विग्नस्य वाक्यं शुभनिमित्तवाचोयुक्तिः । मन्युं कोपं शोकं वा । उत्पादयति । अयं भावः—वस्तुतो मत्परिभवनिमित्तेऽप्यर्थे शुभनिमित्तत्वं पाण्डित्यादारोप्य व्याचक्षाणस्य तव कालोचित उद्वेगो मनागपि न लक्ष्यते, तदेतन्मय्यतिमात्रोद्विग्ने मत्समसुखदुःखस्य तवात्यन्तानर्हमिति ॥

आत्मकृते शुभनिमित्तव्याख्याने राज्ञो विश्वासं जनयितुमाह—**अलमित्या**दि । अनृतम् असत्यम् । उक्तपूर्वं पूर्वम् उक्तम् उक्तपूर्वम् ॥

**आ इति** । एतद् अनृतस्यानुक्तपूर्वत्वम् अथवा सत्यवाक्यत्वम् । अस्ति विद्यते । आ इत्यनुभूतस्य सत्यवाक्यत्वस्य स्मरणे । मनस्स्वास्थ्यसदृशमाह—**गच्छेत्यादि** । भूयः पुनः ॥

**यदित्यादि** ॥

**राजा** —

कोऽनु खल्वेष सहसा कम्पयन्निव मेदिनीम् ।
नदीस्रोत इवाविद्धः क्षणात् संवर्तते ध्वनिः ॥ २१ ॥

ज्ञायतां शब्दः ।

(प्रविश्य)

**भटः** — जयतु महाराजः । श्मशानान्मुहूर्तविश्रान्ततुरगेण कुमारेण तु,

**भगवान्** — एष मामनृतवादिनं न कुर्यात् ।

**राजा** — किं कृतं कुमारेण ।

**भटः** —

कृता नीला नागाः शरशतनिपातेन कपिला
हयो वा योधो वा न वहति न कश्चिच्छरशतम् ।
शरैः स्तम्भीभूताः शरपरिकराः स्यन्दनवराः
शरैश्छन्ना मार्गाः स्रवति धनुरुग्रां शरनदीम् ॥ २२ ॥

---

**कोन्वित्यादि** । नदीस्रोत इव नद्याः स्रोतः जलसन्तान इव । आविद्धः वक्रः । वक्रत्वं च शरगतिवक्रत्वकृतं, ध्वनेः शरगतिजन्यताया बोधयिष्यमाणत्वात् । इदमुपात्तं गम्यमविच्छिन्नवाहित्वं च नदीस्रोतस्साहश्यप्रयोजकं बोद्धव्यम् । संवर्तते जायते ॥ २१ ॥

**जयत्वित्यादि** । श्मशानात् श्मशानं प्राप्य । ल्यब्लोपे पञ्चमी । मुहूर्तविश्रान्ततुरगेण मुहूर्तं विश्रान्ताः तुरगाः रथाश्वाः यस्य तेन । कुमारेण तु, इदं वक्ष्यमाणश्लोकान्वयि । तुशब्दो विशेषद्योतकः ॥

अर्धोक्ते भटवचनशेषस्य स्वीयनिमित्तवाचोयुक्त्यनुगुणतामौत्सुक्यात् सम्भावयति—**एष इत्यादि** ॥

**किमित्यादि** ॥

**कृता इत्यादि** । नागाः गजाः । कपिलाः रक्तवर्णाः शरक्षतासृक्परिलेपवशादिति भावः । हयः अश्वः । शरशतं न न वहति प्रतिहयं प्रतियोधं च बहवो बाणा अङ्गेषु लग्ना इत्यर्थः । शरपरिकराः बाणपरिवाराः बाणमया इत्यर्थः । छ-

**भगवान्** — (आत्मगतम्)

एतदक्षयतूणित्वं येन शक्रस्य खाण्डवे ।
यावत्यः पतिता धारास्तावन्तः प्रेषिताः शराः ॥ २३ ॥

**राजा** — अथ परेष्विदानीं को वृत्तान्तः ।

**भटः** — अप्रत्यक्षं हि तत्र मे । प्रवृत्तिपुरुषाः कथयन्ति—

धनुर्घोषं द्रोणस्तदिदमिति बुद्ध्वा प्रतिगतो
ध्वजे बाणं दृष्ट्वा कृतमिति न भीष्मः प्रहरति ।
शरैर्भग्नः कर्णः किमिदमिति चान्ये नृपतयो
भयेऽप्येको बाल्यान्न भयमभिमन्युर्गणयति ॥ २४ ॥

---

न्नाः रुद्धाः । स्रवति स्रावयति, स्रुधातुरन्तर्भावितण्यर्थः । उग्रां भीषणां । शरनदीं बाणप्रवाहम् । एतेन बाणप्रवाहसमुत्थत्वमुक्तध्वनेरावेदितम् ॥ २२ ॥

**एतदिति** । एतद् धनुष उग्रशरनदीस्रावित्वम । अक्षयतूणित्वम् अक्षये बाणक्षयरहिते तूण्यौ निषङ्गौ यस्यार्जुनस्य धनुषो वा सोऽक्षयतूणिः, तस्य भावस्तत्त्वम् । कार्यहेत्वोरभेदोपचाराद् अक्षयतूणित्वहेतुकमित्यर्थः । अक्षयतूणित्वं क्रियान्तरे दृष्टप्रभावमित्याह—खाण्डवे खाण्डवाख्ये वने । दह्यमाने सतीति शेषः । यावत्यः यत्परिमाणाः । शक्रस्य धाराः खाण्डवदाहशमनार्थमिन्द्रेण प्रवर्तिता मेघवृष्टिधाराः । पतिताः प्रवृत्ताः । तावन्तः तत्परिमाणाः, वृष्टिधारावदविच्छिन्ना असङ्ख्याश्चेत्यर्थः । शराः, येन अक्षयतूणित्वेन हेतुना । प्रेषिताः अर्थादर्जुनेन । इह अक्षयतूणित्वमित्यत्र कबभाव आर्षः । अथवा निषङ्गार्थस्तूणिशब्दो ह्रस्वान्तोऽप्यस्ति—'तूणी चाक्षयसायके' (श्लो० ६१) इति यथा ॥ २३ ॥

**अथेत्यादि** । परेषु शत्रुषु ॥

**अप्रत्यक्षमित्यादि** । तत्र परवृत्तान्तविषये । अप्रत्यक्षं साक्षाद्दर्शनाभावः । प्रवृत्तिपुरुषाः वृत्तान्तोपलम्भनियुक्ताः पुरुषाः ।

कथ्यमानमाह—**धनुरित्यादि** । द्रोणः, धनुर्घोषं चापध्वनिम् अर्थादुत्तररथादुत्पन्नम् । तदिदमिति बुद्ध्वा अमुकसम्बन्धिनोऽमुकचापस्यायं घोष इति प्रत्यभिज्ञायेत्यर्थः । प्रत्यभिज्ञा हि तदिदमिति बुद्धिरित्युच्यते । प्रतिगतः युद्धान्निवृत्त इत्यर्थः । भीष्मः, ध्वजे स्वकीये केतौ । बाणं, परकीयं, दृष्ट्वा, कृतमिति युद्धेनाल-

**भगवान्**—कथमभिमन्युः प्राप्तः । भो राजन् !

युध्यते यदि सौभद्रस्तेजोग्निर्वंशयोर्द्वयोः ।
सारथिः प्रेष्यतामन्यो विक्लबात्र बृहन्नला ॥ २५ ॥

**राजा**—मा मा भवानेवम् ।

भीष्मं रामशरैरभिन्नकवचं द्रोणं च मन्त्रायुधं
कृत्वा कर्णजयद्रथौ च विमुखौ शेषांश्च तांस्तान् नृपान् ।

---

मिति । मत्वेति शेषः । न प्रहरति, अर्थाच्छत्रुम् । कर्णः, शरैः, भग्नः पीडितः परिभूतो वा । अन्ये नृपतयश्च, किमिदमिति इदं द्रोणभीष्मादिभङ्गनिमित्तं प्रत्यर्थिपराक्रमणं । किमिति लोकातिशायीति, चिन्तयन्तीति शेषः । किमित्यतिशयार्थेऽव्ययम् । भयेऽपि इत्थं भयस्थानेऽपि । अभिमन्युः, एकः एक एव, बाल्याद् , भयम् अपायं । न गणयति अगणयन् युध्यत इत्यर्थः । यज्ञानुभवार्थमागतोऽभिमन्युर्गोग्रहणेऽस्मिन् सहायत्वेनानीतो द्रष्टव्यः ॥ २४ ॥

**कथमि**त्यादि ।

**युध्यत** इति । द्वयोः वंशयोः पाण्डवकौरववंशयोः पाण्डवयादववंशयोर्वा । तेजोग्निः तेजसि प्रतापे अग्निः अग्निसदृशः । सुभद्राया अपत्यं पुमान् सौभद्रः अभिमन्युः । युध्यते यदि, अन्यः सारथिः, प्रेष्यताम् उत्तररथवाहनार्थम् । कुत इत्यत्राह—बृहन्नला, अत्र सौभद्रे विक्लबा अशक्ता । कामं भीष्मादिविषये शक्ता, तथापि सौभद्रविषये न शक्तेत्यर्थः । भीष्मादिधर्षिणापि बृहन्नलासारथ्येन सौभद्रशौर्यमधृष्यमिति विराटग्राह्योऽभिप्रायः, विक्लबत्वं पुत्रवात्सल्यप्रयुक्तमिति तु वक्तृहृदयनिगूढोऽभिप्रायः ॥ २५ ॥

**मामेति** । भवान्, एवं 'विक्लबात्र बृहन्नला' इत्यनेन प्रकारेण । मा मा, वदत्विति शेषः । बृहन्नलायाः सौभद्रविषये वैक्लब्यं, तदन्यविषये प्रागल्भ्यं वा न कार्यकारि, अपि तु मत्पुत्रशौर्यमेवेति सौभद्रधर्षणं प्रति सन्देहस्ते मा भूदिति भावः ।

तदिदमुपपादयति—**भीष्ममिति** । रामशरैः परशुरामबाणैः । अभिन्नकवचम् अविदारितकञ्चुकम् । एतेन रामाजय्यत्वमम्बोपाख्यानप्रसिद्धमुक्तम् । भीष्मं । मन्त्रायुधं मन्त्रः आयुधं प्रहरणं यस्य तं तथाभूतम् । एतेन शौर्यातिरिक्तं तपोबलशालित्वं सूचितम् । द्रोणं च, कर्णजयद्रथौ च, शेषान् अवशिष्टान् । तां-

सौभद्रं स्वशरैर्न धर्षयति किं भीतः पितुः प्रत्ययात्
संसृष्टोऽपि वयस्यभावसदृशं तुल्यं वयो रक्षति ॥ २६ ॥

**भटः** — एष खलु कुमारस्य रथः,

आलम्बितो भ्रमति धावति तेन मुक्तो
न प्राप्य धर्षयति नेच्छति विप्रकर्तुम् ।
आसन्नभूमिश्चपलः परिवर्तमानो
योग्योपदेशमिव तस्य रथः करोति ॥ २७ ॥

---

स्तान्, नृपांश्च, विमुखानिति युक्तः पाठः । विमुखान् युद्धपराङ्मुखान् । विमुखाविति द्विवचनान्तपाठे यथास्थिते वचनविपरिणामेन भीष्मादिषु प्रत्येकमन्वयः कल्पनीयः । कृत्वा, सौभद्रम् अभिमन्युं । किं न धर्षयति धर्षयिष्यत्येव । अर्थात् कुमारः कर्ता । भीष्मादीन् विमुखीकृतवतो वीरस्य सौभद्रधर्षणं नातिभार इति भावः । अथार्जुनभयादभिमन्युमधर्षयन्नेव कुमारस्तेन सह सख्यं यदि कुर्वीत, तदपि नानुचितमित्यभिप्रायेणाह—पितुः प्रत्ययात् भीतः पितुः सौभद्रजनकस्यार्जुनस्य । प्रत्ययात् जगदेकवीरत्वख्यातेः । भीतः भयात्, भीशब्दात् तसिः । भीत इति क्तान्तं वा, शङ्कितः सन्नित्यर्थः । संसृष्टोऽपि संसर्गं सखित्वरूपं प्राप्तोऽपि । संसर्गो हि परेण मनोवाक्कायकर्मभिर्मिश्रणम् । तच्च सखिकर्मैव भवतीति संसृष्टः सखोच्यते । अपिशब्दः पाक्षिकाभ्युपगमे । वयस्यभावसदृशं सखित्वानुरूपं । तुल्यं सौभद्रवयसा समानं । वयः, रक्षति पालयति । समानवयसाभिजातेन सह संसर्गकरणं हि वयस्समुचित आचारः; तं रक्षन्नर्थाद् वय एव रक्षतीति भावः । 'भीतः पितुः प्रत्ययाद' इत्यस्य पूर्ववाक्येन वा सम्बन्धः । तदा संसृष्टत्वस्य निमित्तं समानबलत्वं वक्तव्यम् । 'प्रत्ययस्तु ख्यातिरन्ध्रविश्वासाधीनहेतुषु' इति केशवः ॥ २६ ॥

एष इत्यादि । श्लोकान्वयि ।

**आलम्बित** इति । कुमारस्य एष रथः, तेन सारथिना जनेन । आलम्बितः अश्वप्रग्रहेषु गृहीतः सन् स्थित्यर्थं । भ्रमति न तु तिष्ठति । मुक्तः गमनार्थं मुक्ताश्वप्रग्रहः सन् । धावति, न तु युक्तं गच्छति । एतेनालम्बनमोचनयोरनास्थाकृतत्वमुक्तम् । प्राप्य न धर्षयति अवसरं लब्ध्वापि न लङ्घयति, अर्थात् प्रतिरथम् । विप्रकर्तुं प्रतिरथमभिभवितुं । नेच्छति । एतेन सारथेः प्रतिरथधर्षणविप्रकारयोः

**राजा**—गच्छ। भूयो ज्ञायतां वृत्तान्तः।

**भटः**—यदाज्ञापयति महाराजः। (निष्क्रम्य प्रविश्य) जयतु महाराजः। जयतु विराटेश्वरः। प्रियं निवेदये महाराजाय। अवजितं गोग्रहणम्। अपयाता धार्तराष्ट्राः।

**भगवान्**—दिष्ट्या भवान् वर्धते।

**राजा**—न न। भगवतो वृद्धिरेषा। अथ कुमार इदानीं क्व।

**भटः**—दृष्टपरिस्पन्दानां योधपुरुषाणां कर्माणि पुस्तकमारोपयति कुमारः।

---

पेक्षा प्रकाशिता। आसन्नभूमिचपलः आसन्नभूमौ प्रतिरथसमीपप्रदेशे चपलश्चञ्चलः। परिवर्तमानः परितश्चरन्। रथः, तस्य कुमारस्य। योग्योपदेशं योग्याया अभ्यासस्य अर्थाद् रथचर्याविषयस्य उपदेशम् अध्यापनं। करोतीव। यो हि रथो रथचर्याभ्यासोपदेशार्थः, स प्रतिरथधर्षणादिरूपप्रयोजनशून्ये विचित्रे सञ्चारे व्याप्रियते। प्रकृतोऽपि रथस्तथाभूत इति तत्र तदुपदेशकरणमुत्प्रेक्ष्यते॥ २७॥

भगवदुक्तिसंवादिनि सारथिवैक्लब्यवृत्तान्ते श्रुते तदुत्तरकालवृत्तज्ञानौत्सुक्यादाह—**गच्छेत्यादि**॥

**यदित्यादि**। अवजितं पराजितं, अर्थात् कुमारेण॥

**दिष्ट्येत्यादि**। दिष्ट्येति हर्षे। भवान्, वर्धते गोपरित्राणलक्षणं धार्तराष्ट्रपराजयलक्षणं चाभ्युदयं प्राप्नोति॥

**न नेत्यादि**॥

**दृष्टेति**। कुमारः, दृष्टपरिस्पन्दानां दृष्टः प्रत्यक्षितः परिस्पन्दः परिश्रमः येषां तेषां तथाभूतानां। युद्धे कृतसाहसानामित्यर्थः। योधपुरुषाणाम्। कर्माणि अपदानानि। पुस्तकं पुस्तं लेप्यालेख्यादिक्रिया, इह तु तदधिकरणभूतं पटफलकादिकं लक्ष्यते, पुस्तमेव पुस्तकं, तत्। आरोपयति आरूढानि करोति, आलेख्यात्मना पुस्तके निवेशयतीत्यर्थः। योधापदानानां हि श्लाघनीयानामालेख्यकरणं योधानां पूजा भवति। पुस्तकमारोपयतीत्यस्यान्या व्याख्या—पुस्तकं लेख्याधारपत्रसम्पुटम्, आरोपयति तस्मिन् लिखतीत्यर्थः। लेखनं च योधपुरुषपूजावसरे तदविस्मरणार्थम्। **इह रुहेर्गत्यर्थत्वादणिकर्तॄणां कर्मणां णौ कर्मत्वम्**॥

**राजा** — अहो श्लाघनीयव्यापारः खल्वयं कुमारः।

ताडितस्य हि योधस्य श्लाघनीयेन कर्मणा।
अकालान्तरिता पूजा नाशयत्येव वेदनाम्॥ २८॥

अथ बृहन्नलेदानीं क्व।

**भटः** — प्रियनिवेदनार्थमभ्यन्तरं प्रविष्टा।

**राजा** — बृहन्नला तावदाहूयताम्।

**भटः** — यदाज्ञापयति महाराजः। (निष्क्रान्तः।)

(ततः प्रविशति बृहन्नला।)

**बृहन्नला** — (निरूप्य सविमर्शम्)

गाण्डीवेन मुहूर्तमाततगुणेनासीत् प्रतिस्पर्धितं
बाणानां परिवर्तनेष्वविशदा मुष्टिर्न मे संहता।

---

**अहो** इत्यादि। अहोशब्दः प्रशंसायाम्।

**ताडितस्येत्यादि**। श्लाघनीयेन, कर्मणा साहसक्रियया हेतुना। ताडितस्य साहसकर्तृसुलभं ताडनं शत्रुसकाशात् प्राप्तस्येत्यर्थः। अकालान्तरिता कालान्तरिता कालव्यवहिता न भवतीत्यकालान्तरिता सद्य एव क्रियमाणेत्यर्थः। पूजा तत्कर्मपुरस्कारोपणादिरूपा बहुमानना। वेदनां ताडनजनितां व्यथां। नाशयत्येव। हिः प्रसिद्धौ॥ २८॥

**प्रियेत्यादि**॥

रणविस्तरश्रवणौत्सुक्यादाह — **बृहन्नलेत्यादि**। बृहन्नलेत्यतः प्राग् 'गच्छ' इति ग्रन्थान्तरे पाठः॥

**यदित्यादि**॥

अथ भटाहूताया बृहन्नलायाः प्रवेशः—**तत** इत्यादि।

युद्धोपक्रमकालिकीं स्वावस्थां प्रणिधानेन बुद्धावुपस्थाप्याह—**गाण्डीवेनेति**। आततगुणेन आततो बद्धः गुणो मौर्वी यस्मिन् तेन तथाभूतेन भवता। गाण्डीवेन धनुर्विशेषेण सह, सहार्थे तृतीया। मे मम। प्रतिस्पर्धितं प्रतिस्पर्धा लक्षणया अविधेयविधेयीकरणार्थोऽभियोगः। मुहूर्तम् आसीत् नाडीद्वयकालव्यापि जातमित्यर्थः। परिचयचिरविच्छेदान्मद्धस्तयोरयथापुरविधेये गाण्डीवे तस्याततगुणत्वसम्पत्तये मया मुहू-

गोधास्थानगता न चास्ति पटुता स्थाने हृतं सौष्ठवं
स्त्रीभावाच्छिथिलीकृतः परिचयादात्मा तु पश्चात् स्मृतः ॥ २९ ॥

मया हि,

अनेन वेषेण नरेन्द्रमध्ये लज्जायमानेन धनुर्विकृष्टम् ।
यात्रा तु तावच्छरदुर्दिनेषु शीघ्रं निमग्नः कलुषश्च रेणुः ॥ ३० ॥

---

र्तकालं महान् प्रयत्नः कृत इत्यभिप्रायः । 'प्रतिस्तम्भितम्' इति पाठे गाण्डीवकर्तृकं प्रतिस्तम्भनमित्यर्थः । गुणारोपणकाले गाण्डीवेन नमनानुन्मुखेनैव मुहूर्तं स्थितमित्यभिप्रायः । मे मुष्टिः हस्तविन्यासविशेषः । बाणानां, परिवर्तनेषु ग्रहणमोचनपर्यायेषु विषये । अविशदा अप्रसन्ना अप्रवणेत्यर्थः । न संहता न दृढा च । इहापि मुहूर्तमिति सम्बध्यते । गोधास्थानगता गोधायाः ज्याघातवारणस्य स्थानं हस्तैकदेशः तद्गता तत्सम्बद्धा । पटुता च, मुहूर्तं, नास्ति नासीत् । अस्तीति सत्तार्थकमव्ययम् । स्थाने धानुष्ककरणीये स्थितिविशेषे सौष्ठवं समीचीनत्वं । मुहूर्तं, हृतम् अपनीतम्, अर्थात् स्त्रीभावेन कर्त्रा । गाण्डीवप्रतिस्पर्धितादयः स्थानासौष्ठवान्ता दोषाः स्त्रीस्वभावचिरावलम्बनप्रयुक्ताः प्रमुखे मुहूर्तकालं स्थिता इति भावः । मुहूर्तमित्युक्त्या तदुत्तरकाले ते दोषा अपगता इति गम्यते । अपगमे कारणमाह—पश्चात् तु मुहूर्तोत्तरकाले पुनः । आत्मा पारमार्थिकः पुरुषस्वभावः । परिचयाद् मुहूर्तसंसिद्धाद् धनुर्व्यापारपरिचयाद्धेतोः । स्त्रीभावात् शिथिलीकृतः सन्, स्त्रीभावात् स्त्रीस्वभावाद्, अपादानात् । शिथिलीकृतः सन् श्लथबन्धः कृतः सन् । आत्मा हि स्त्रीस्वभावेन बलवता चिरं संयतः इदानीं पुरुषकर्मपरिचयेन तद्यन्त्रणान्मोचित इत्यभिप्रायः । स्मृतः विस्मृतशास्त्रवत् स्मृतिविषयः कृतः सम्यगनुष्ठानानुगुण्यं यथा स्यात् तथा चित्तारूढः कृत इत्यर्थः । एतेन प्रतिस्पर्धितादीनां स्त्रीभावदोषाणां पश्चान्निवृत्तिः, स्वीयस्य धनुर्विद्यानैपुण्यस्य निरङ्कुशप्रवृत्तिश्च द्योतिते । "आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि" इति मेदिनी । 'द्वे तु नाड्यौ मुहूर्तोऽस्त्री' इति केशवः, 'गोधा तला च न नरौ हस्तघ्नो ज्यानिवारणे" इति यादवः ॥ २९ ॥

आत्मस्मरणानन्तरवृत्तमाह—**मया हि अनेनेति** । मया हि, नरेन्द्रमध्ये, **अनेन वेषेण** स्त्रीरूपेण हेतुना । लज्जायमानेन लज्जामनुभवता सता । एतेन स्वोत्साहस्य लज्जानुबन्धप्रयुक्तमतीमत्वं सूचितम् । धनुः चापं । विकृष्टं व्यापरितं ।

भोः,

जित्वापि गां विजयमप्युपलभ्य राज्ञो
नैवास्ति मे जयगतो मनसि प्रहर्षः ।
दुःशासनं समरमूर्धनि सन्निगृह्य
बद्ध्वा यदद्य न विराटपुरं प्रविष्टः ॥ ३१ ॥

उत्तराप्रीतिदत्तालङ्कारेणालङ्कृतो व्रीलित इवास्मि राजानं द्रष्टुम् । तस्माद् विराटेश्वरं पश्यामि । (परिक्रम्यावलोक्य) अये अयमार्यो युधिष्ठिरः,

सयौवनः श्रेष्ठतपोवने रतो नरेश्वरो ब्राह्मणवृत्तमाश्रितः ।
विमुक्तराज्योऽप्यभिवर्धितः श्रिया त्रिदण्डधारी न च दण्डधारकः ॥ ३२ ॥

---

तु तथापि धनुर्विकर्षणस्य सलज्जमनुष्ठितत्वेऽपीत्यर्थः । यात्रा तावत् सञ्चारस्तावत्, अर्थात् प्रतिसैन्यस्य । शरदुर्दिनेषु बाणवर्षेषु । जातेति शेषः । लज्जामन्थरमपि धनुर्विकर्षणं महतीं शरवृष्टिमजनयदिति भावः । शरवृष्टिसिद्धं फलमाह—रेणुः युद्धभूमिगतः परागः । कलुषः सन् आविलद्रवत्वापन्नः सन् । एतेन शरविदारितशत्रुसैन्यदेहक्षरितरक्तप्रवाहसम्भेदो रेणोर्द्योत्यते । शीघ्रं, निमग्नः भुवि लीनः । लज्जायमानशब्दो लज्जाशब्दात् 'सुखादिभ्यः कर्तृवेदनायाम्' (३-१-१८) इति क्यङा साध्यः । तस्य हि सुखादौ पाठः कल्पनीयः । "कलुषं तु नपि ह्यघे । सूक्ष्मैलायां तु कलुषी स्त्री त्रिषु त्वाविलद्रवे ।" इति केशवः । 'कलुषः सरेणुः' इति पाठान्तरम् ॥ ३० ॥

**भो** इति विषादे ।

**जित्वेत्यादि** । जित्वापि शत्रुहस्तात् प्रत्याहृत्यापि । राज्ञः विराटस्यास्मदुपजीव्यस्य । इह जयोपलम्भक्रिययोः प्रहर्षक्रियया समानकर्तृकत्वात् क्त्वाप्रत्ययोपपत्तिः । अप्रहर्षे हेतुमुत्तरार्धेनाह—समरमूर्धनि युद्धान्ते । सन्निगृह्य सम्यङ् निगृहीतं कृत्वा ॥ ३१ ॥

**उत्तरेत्यादि** । उत्तराप्रीतिदत्तालङ्कारेण उत्तरया तदाख्यया विराटकन्यया प्रीतिदत्तो योऽलङ्कारः, तेन । तस्माद् लब्धजयत्वाद् विराटाह्वानाद्वा ।

**सयौवन इत्यादि** । सयौवनः युवा । अथापि, श्रेष्ठतपोवने रतः श्रेष्ठे तपोवने आसक्तः । तपोवने रतिर्हि वार्धकोचितेत्यभिप्रायः । अप्यर्थ एवमुत्तरत्रापि गम्यः । त्रिदण्डधारी त्रयाणां दण्डानां वेणुलगुडानां समाहारस्त्रिदण्डम् ।

(उपगम्य) (क) भअवं! वन्दामि ।

भगवान् — स्वस्ति ।

बृहन्नला — (ख) जेदु भट्टा ।

राजा —

अकारणं रूपमकारणं कुलं महत्सु नीचेषु च कर्म शोभते ।
इदं हि रूपं परिभूतपूर्वकं तदेव भूयो बहुमानमागतम् ॥ ३३ ॥

बृहन्नले! परिश्रान्तामपि भवतीं भूयः परिश्रमयिष्ये। उच्यतां रणविस्तरः ।

---

(क) भगवान्! वन्दे ।

(ख) जयतु भर्ता ।

---

समाहारे द्विगुः । 'पात्राद्यन्तस्य न' (२ ४·३०) इति स्त्रीत्वाभावः । त्रिदण्डं धारयितुं शीलमस्येति त्रिदण्डधारी कुटीचकसंन्यासी । तस्य हि त्रिदण्डाशिखायज्ञोपवीतादिधारणं विहितम् । दण्डधारकः न च, दण्डधारकः दण्डो दुष्टदमनं तत्प्रणेता, नैव भवति । लगुडधारको नैव भवतीति च गम्यते । इह प्रतिपादमापातविरुद्धयोर्द्वयोर्धर्मयोर्निर्देशाद् विरोधाभासालङ्कारः ॥ ३२ ॥

भअवमित्यादि । 'भगवन्! अभिवादये' इति त्वपपाठः । संस्कृतासङ्गतेः ॥

स्वस्तीति ॥

जेदु इत्यादि ॥

बृहन्नलाप्रभावं प्रशंसति—अकारणमिति । रूपं पुंस्त्वादि । अर्थाज्जनस्य । अकारणम् अकिञ्चित्करं बहुमाननिमित्तं न भवतीत्यर्थः । कुलं जन्मवंशः । अकारणम् । महत्सु रूपकुलोत्कृष्टेषु । नीचेषु रूपकुलापकृष्टेषु च जनेषु । कर्म कलाकौशलं । शोभते प्रकाशते । कर्मैव शोभमानं सत् कर्मकारिणाम् उभयेषामविशेषेण बहुमाननिमित्तं भवतीत्यभिप्रायः । अस्य सामान्यन्यायस्य समर्थकं प्रकृतं विशेषमाह—हिशब्द उक्तोपपादने । इदं दृश्यमानं । रूपं बृहन्नलागतं स्त्रीरूपं । परिभूतपूर्वकं पूर्वं परिभूतम् अवज्ञातं । कुत्सायां कन् । तदेव पूर्वावज्ञातं रूपमेव । भूयः पश्चाद् , अस्मिन् महायुद्धसारथ्यनिर्वाहोत्तरकाल इत्यर्थः । बहुमानं पूजाम् । आगतं प्राप्तम् । अर्थान्तरन्यासोऽलङ्कारः ॥ ३३ ॥

धार्तराष्ट्रापयानान्तस्य सामान्याकारेण श्रुतस्य युद्धवृत्तान्तस्यावान्तरयावद्विशेषश्रवणकौतुकादाह—बृहदित्यादि । परिश्रमयिष्ये परिश्राम्यन्तीं प्रयोजयिष्ये । परि-

बृहन्नला — (क) सुणादु भट्टा ।
राजा — ऊर्जितं कर्म । संस्कृतमभिधीयताम् ।
बृहन्नला — श्रोतुमर्हति महाराजः ।

(प्रविश्य)

भटः — जयतु महाराजः ।
राजा —
अपूर्व इव ते हर्षो ब्रूहि केनासि विस्मितः ।
भटः —
अश्रद्धेयं प्रियं प्राप्तं सौभद्रो ग्रहणं गतः ॥ ३४ ॥
बृहन्नला — कथं गृहीतः । (आत्मगतम्)

---

(क) शृणोतु भर्ता ।

---

श्रमश्च रणविस्तरवचनलक्षणः । रणविस्तरः युद्धसम्बद्धो वाक्प्रपञ्चः ॥

सुणादु इत्यादि ॥

ऊर्जितमिति । कर्म वर्ण्यं युद्धापदानम् । ऊर्जितम् ओजस्वि । संस्कृतम् अभिधीयताम् संस्कृतवाक्यम् उच्चार्यतां तत्प्रतिपादनाय, न तु प्राकृतवाक्यमित्यर्थः । संस्कृतं हि ऊर्जितवस्त्वभिव्यञ्जकवर्णादिनिखिलपरिकरसम्पद्योगरमणीयतया वर्ण्यवस्त्वत्यन्तानुगुणं; प्राकृतं त्वताहशतया तदननुगुणमिति भावः ॥

श्रोतुमित्यादि ॥

यावद् बृहन्नला रणविस्तरं वक्तुमुपक्रमते, तावदपूर्वसिद्धमतिप्रियं जयघोषं श्रावयितुं भटः प्रविश्य आह—जयत्वित्यादि ॥

अपूर्व इत्यादि । ते हर्षः, अपूर्व इव अननुभूतपूर्व इव । आकारेण लक्ष्यत इति शेषः । केन, हेतुना । विस्मितः हर्षकारणभूतं विस्मयं प्राप्तः । असि । ब्रूहि कथय । गम्याया अपि वचनचोदनायाः शब्देनाभिधानं वचने विलम्बासहतां श्रवणौत्सुक्यनिमित्तां सूचयितुम् ॥

अश्रद्धेयमिति । अश्रद्धेयं मनसाप्यप्रतर्क्यं । प्रियं वस्तु । प्राप्तं हस्तगतम् । आसीदिति शेषः । किं तत् प्रियं वस्त्वित्यत्राह—सौभद्रः अभिमन्युः । ग्रहणं, ग्रहः प्राप्तः ॥ ३४ ॥

कथमित्यादि ।

तुलितबलमिदं मयाद्य सैन्यं परिगणितं च रणेऽद्य मे स दृष्टः ।
सदृश इह तु तेन नास्ति कश्चित् क इह भवेन्निहतेषु कीचकेषु ॥ ३५ ॥

**भगवान्**—बृहन्नले ! किमेतत् ।

**बृहन्नला**—भगवन् !

न जाने तस्य जेतारं बलवाञ्छिक्षितस्तु सः ।
पितॄणां भाग्यदोषेण प्राप्नुयादपि धर्षणम् ॥ ३६ ॥

**राजा**—कथमिदानीं गृहीतः ।

**भटः**—

रथमासाद्य निःशङ्कं बाहुभ्यामवतारितः ।

---

**तुलितेति** । अद्य इदानीम् । इदं सैन्यं विराटानीकं । मया, तुलितबलं परीक्षितशक्ति । परिगणितं च सैन्यान्तर्गतवीरपुरुषगणनाद्वारेण संख्यातं च । सः अभिमन्युः । मे मया । रणे युद्धे । अद्य दृष्टः इदानीमेव पराक्रममाणः प्रत्यक्षितः । तद्दर्शनानन्तरं न बहवः क्षणा अतीताः, इयत्यत्यल्पे कालान्तरे तस्य ग्रहणमसम्भावितमित्यद्येत्यनेन द्योत्यते । तद्ग्रहणमधिकबलेन कर्तुमर्हं, विराटसैन्ये तत्समबलोऽपि नास्तीत्याह—इह तु विराटसैन्ये तु । तेन अभिन्युना । सदृशः समानबलः । कश्चित्, नास्ति । कीचकेषु निहतेषु सत्सु । इह प्रकृते सौभद्रग्रहणरूपे कार्ये । कः भवेत् अर्थात् कर्ता । कीचकस्तु नागायुतबलः कामं कर्ता भवेत्, अतीते तस्मिन् कोऽन्यस्तद्ग्रहणार्हो विराटपक्ष्योऽस्तीत्यभिप्रायः ॥ ३५ ॥

**बृहन्नले** इत्यादि । सारथिस्तद्ग्रहणकारणं जानातीति बुद्धिमूलया तज्जिज्ञासयेव प्रश्नः । किमेतदसम्भावितमभिमन्योरपि परिभवस्थानमुपनतमित्यर्जुनं प्रति स्वदुःखाविष्करणे तु निगूढमस्य वाक्यस्य तात्पर्यम् ॥

उभयाभिप्रायानुगुणमुत्तरमाह—**भगवन् ! न जाने** इत्यादि । पितॄणां पाण्डवानाम् अथचास्माकं । भाग्यदोषेण अभाग्येन नानाविधपरिभवहेतुना । धर्षणं परिभवं प्रकृतं । प्राप्नुयादपि लभेतापि । येयं धर्षणप्राप्तिर्भटेनावेदिता सा सम्भाव्यत एवेत्यभिप्रायः ॥ ३६ ॥

ग्रहणप्रकारं पृच्छति—**कथमित्यादि** ॥

**रथमित्यादि** । रथम् अभिमन्युरथम् । आसाद्य आरुह्य । बाहुभ्याम्, अवतारितः अर्थाद रथाद् बहिरानीतः ॥

**राजा** — केन ।

**भटः** —

य: किलैष नरेन्द्रेण विनियुक्तो महानसे ॥ ३७ ॥

**बृहन्नला** — (अपवार्य) एवम् आर्यभीमेन परिष्वक्तः, न गृहीतः ।

दूरस्था दर्शनादेव वयं सन्तोषमागताः ।
पुत्रस्नेहस्तु निर्विष्टो येन सुव्यक्तकारिणा ॥ ३८ ॥

**राजा** — तेन हि सत्कृत्य प्रवेश्यतामभिमन्युः ।

**भगवान्** — भो राजन् ! वृष्णिपाण्डवनाथस्याभिमन्योः पूजां भयादिति लोको ज्ञास्यति । तदवधीरणमस्य न्याय्यम् ।

---

केनेति पृष्ट आह—**य** इत्यादि । महानसे विनियुक्तः पाकशालायाम् अधिकारितः । तेनावतारित इत्यार्थम् ॥ ३७ ॥

**एवमित्यादि** । एवम् अवतारणभङ्ग्या । आर्यभीमेन, परिष्वक्तः वात्सल्याद् आलिङ्गितः । न गृहीतः न केनाचिद् युद्धे जित्वा गृहीत इत्यर्थः ।

**दूरस्था** इति । वयं दूरस्थाः सन्तः । दर्शनादेव पुत्रस्यावलोकनमात्रात् । सन्तोषं तृप्तिम् । आगताः प्राप्ताः, न पुनः पुत्रसंस्पर्शनसौख्यं प्राप्ता इत्यर्थः । भीमे विशेषमाह—यद्यपि चतुर्थः पादः 'येन सुव्यक्तकारिणा' इत्येव द्वयोरपि मातृकयोः पठ्यते, तथाप्यर्थसामञ्जस्याय 'तेन सुव्यक्तकारिणा' इत्येव स पठितुं युक्तः । तेन आर्यभीमेन पुनः । सुव्यक्तकारिणा सुव्यक्तं सर्वजनप्रत्यक्षम् अथवा गाढम् आलिङ्गनं कर्तुं शीलमस्येति तेन तथाभूतेन सता । पुत्रस्नेहः, निर्विष्टः फलत उपभुक्तः । स्नेहफलसर्वस्वं पुत्रस्यालिङ्गनं दर्शनेऽप्यननुभूतवन्तं धिङ् मामिति भावः ॥ ३८ ॥

**तेनेत्यादि** । तेन हि तर्हि । सत्कृत्य पूजयित्वा, न पुनरनादृत्य । हस्तगतस्य हि शत्रुपक्ष्यस्यानादर औत्सर्गिकः । स त्वभिमन्युविषये न कार्य इत्यभिप्रायः ॥

**भो राजन्नित्यादि** । वृष्णिपाण्डवनाथस्य वृष्णयो यादवाः पाण्डवाश्च नाथा यस्य तस्य तथाभूतस्य । भयादिति वृष्णिपाण्डवभयान्निमित्तात् सा कृतेति । **अवधीरणम्** अनादरणम् ॥

**राजा**—नावधीरणमर्हति यादवीपुत्रः । कुतः,

पुत्रो ह्येष युधिष्ठिरस्य तु वयस्तुल्यं हि नः सूनुना
सम्बन्धो द्रुपदेन नः कुलगतो नप्ता हि तस्माद् भवेत् ।
जामातृत्वमदूरतोऽपिच भवेत् कन्यापितृत्वं हि नः
पूजार्होऽप्यतिथिर्भवेत् स्वविभवैरिष्टा हि नः पाण्डवाः ॥ ३९ ॥

**भगवान्**—एवमेतत् । वक्तव्यं परिहर्तव्यं च ।

**राजा**—अथ केनायं प्रवेशयितव्यः ।

**भगवान्**—बृहन्नलया प्रवेशयितव्यः ।

**राजा**—बृहन्नले ! प्रवेश्यतामभिमन्युः ।

---

**नावधीरणमित्यादि** । यादवीपुत्रः यादव्याः यदुगोत्रापत्यभूतायाः सुभद्रायाः पुत्रः ।

अनवधीरणीयत्वे पञ्च हेतूनाह—पुत्र इत्यादि । तुशब्दो हेतुगतविशेषद्योतकः । वयः अर्थादभिमन्योः । नः सूनुना उत्तरेण । कुलगतः कुलपरम्परायातः । नप्ता दौहित्रः । द्रुपदस्य मत्कुलबन्धोर्नप्ता ममापि धर्मतो नप्तेत्यर्थः । 'नप्ता तु पौत्रदौहित्रौ' इति यादवः । भवेत् अर्थादभिमन्युः । जामातृत्वं दुहितृपतित्वम्, अर्थादभिमन्योः । अदूरतः अचिरात् । जामातृत्वसम्भावनायां हेतुमाह—हि यस्मात् । नः, कन्यापितृत्वम् । अस्तीति शेषः । अतिथिरपि अतिथिश्च । एवञ्च युधिष्ठिरपुत्रत्वं स्वपुत्रसमवयस्कत्वं धर्मनप्तृत्वं सम्भावितजामातृभावत्वं यावद्विभवपूजनीयातिथित्वमिति पञ्च हेतवोऽवधीरणप्रतिषेधस्य प्रतिपादिताः ॥ ३९ ॥

**एवमित्यादि** । एतत् त्वदुक्तम् । एवम् इत्थमेव । नान्यथेत्यर्थः । किमर्थं तर्हि भवता 'तदवधीरणमस्य न्याय्यम्' इति प्रागुक्तमिति चेत् तत्राह—वक्तव्यं पूर्वपक्षतया तद् वक्तुमर्हम्, अत एव मयोक्तमित्यर्थः । परिहर्तव्यं च उक्तैः कारणैः परिहर्तुं योग्यं च । असदर्थो ह्याशङ्क्य परिहृतः प्रद्विष्टतरो भवतीत्यावश्यकावेव शङ्कापरिहारावनवधीरणस्यावाभ्यामनुष्ठिताविति भावः ॥

**अथेत्यादि** ॥

**बृहन्नलयेत्यादि** । बृहन्नला हि जितकाशिनी पराजितपुरुषगुणविशेषाभिज्ञा तदनुरूपं सत्कारं विधातुं प्रभविष्यतीत्यभिप्रायः ॥

**बृहादित्यादि** ॥

**बृहन्नला** — यदाज्ञापयति महाराजः। (आत्मगतम्) चिरस्य खल्वाकाङ्क्षितोऽयं नियोगो लब्धः। (निष्क्रान्ता।)

**भगवान्** — (आत्मगतम्)

अद्येदानीं यातु सन्दर्शनं वा शून्ये दृष्ट्वा गाढमालिङ्गनं वा।
स्वैरं तावद् यातु मुद्बाष्पतां वा मत्प्रत्यक्षं लज्जते ह्येष पुत्रम्॥ ४० ॥

**राजा** — पश्यतु भवान् कुमारस्य कर्म।

नृपा भीष्मादयो भग्नाः सौभद्रो ग्रहणं गतः।
उत्तरेणाद्य संक्षेपादर्थतः पृथिवी जिता॥ ४१ ॥

(ततः प्रविशति भीमसेनः।)

---

**यदाज्ञापयती**त्यादि। आकाङ्क्षितः प्रार्थितः। आकाङ्क्षा च 'पुत्रस्नेहस्तु निर्दिष्टः' इत्युक्त्या प्राक् सूचिता। नियोगः पुत्रप्रवेशनाधिकारः॥

**अद्ये**ति। अद्य, इदानीम् अस्मिन् स्वपुत्रप्रवेशनावधिके काले। एषः अर्जुनः। सन्दर्शनं वा, अर्थात् पुत्रस्य। यातु लभताम्। शून्ये विजने। दृष्ट्वा, गाढं निबिडम्। आलिङ्गनं वा, यातु। स्वैरं तावद् अशङ्कितमेव। मुद्बाष्पतां वा मुदा पुत्रसन्दर्शनालिङ्गनजनितेनानन्देन बाष्पः यस्य स मुद्बाष्पः इति व्यधिकरणबहुव्रीहिः, तस्य भावो मुद्बाष्पता, तां वा। यातु, इह वाशब्दाः सर्वे समुच्चयार्थाः, सन्दर्शनादीनां त्रयाणामपि लिप्सितत्वाविशेषात् सहभावसम्भवाच्च। अथाभिमन्युमिह प्रवेश्य पश्चात् तत्सन्दर्शनादिकमर्जुनोऽनुभवत्विति चेत्। तत्राह—हि यस्मात्। मत्प्रत्यक्षं मद्दर्शनगोचरे स्थितं। पुत्रम्, उद्दिश्येति शेषः। लज्जते अपत्रपते। मत्पुरतः पुत्रालिङ्गनादिकं कर्तुं लज्जावशान्नोत्सहत इति भावः। 'उद्बाष्पतां यातुं लज्जत' इति योजनं तु क्लिष्टं दुःश्लिष्टार्थं चेत्युपेक्षितम्॥ ४० ॥

पुत्रजयसन्तोषेऽभिमन्युग्रहणवार्तयोद्रिक्ते सति पुत्रं प्रशंसति—**पश्यत्वि**त्यादि।

**नृपा** इत्यादि। संक्षेपाद् अबहुपरिकरबन्धात्। अर्थतः अर्थापत्तिन्यायात्, कैमुतिकन्यायादिति यावत्। भीष्मं हि सर्वपृथिवीविजयिपरशुरामजेतारं जितवतः पृथिवीजेतृत्वं कैमुतिकन्यायात् सिध्यतीति॥ ४१ ॥

गृहीतं स्वपार्श्वे रक्षतो ग्रहीतुः प्रवेशो गृहीतप्रवेशात् पूर्वं वक्तुमुचित इति कृत्वा ग्रहीतारं प्रवेशयति—**ततः** इत्यादि।

**भीमसेनः**—

आदीपिते जतुगृहे स्वभुजावसक्ता मद्भ्रातरश्च जननी च मयोपनीताः ।
सौभद्रमेकमवतार्य रथात्तु बालं तं च श्रमं प्रथममद्य समं हि मन्ये ॥ ४२ ॥

इत इतः कुमारः ।

(ततः प्रविशत्यभिमन्युर्बृहन्नला च ।)

**अभिमन्युः**—भोः ! कोनुखल्वेषः,

विशालवक्षास्तनिमार्जितोदरः स्थिरोन्नतांसोरुमहान् कटीकृशः ।
इहाहृतो येन भुजैकयन्त्रितो बलाधिकेनापि न चास्मि पीडितः ॥ ४३ ॥

---

सौभद्रस्य रथादवतारणे स्वात्मनानुभूतं श्रमं निरूप्याह—**आदीपित** इति । जतुगृहे लाक्षामये गृहे दुर्योधननिर्मापिते । आदीपिते अग्निना संदीपिते सति । मया, मद्भ्रातरश्च, जननी च अस्मन्माता च । स्वभुजावसक्ताः सन्तः स्वभुजारोपिताः सन्तः । उपनीताः वाहिताः । तु तथापि, एवं मम बहुजनभारवहनसामर्थ्यसद्भावेऽपीत्यर्थः । अहम्, एकं, बालम्, इदं विशेषणद्वयं भाराल्पत्वसूचनार्थम् । सौभद्रम्, अवतार्य भुजाभ्यां रथादवरोप्य । तं श्रमम् अवतारणविषयं खेदं । प्रथमं श्रमं च पूर्वानुभूतं मद्भ्रातृमातृवहनखेदं च । समं हि तुल्यमेव । मन्ये जाने । मद्भ्रात्रादिजनपञ्चकदेहसमुदाये यादृशं मयानुभूतं गौरवं, तादृशं स्वदेह एकस्मिन् गौरवं सौभद्रेणावतारणवामवृत्तिना श्वासनिरोधादिप्रभावात् समुपजनितमिति भावः ॥ ४२ ॥

**इत** इत्यादि ॥

**तत** इत्यादि । बृहन्नला सौभद्रप्रवेशनाय नियुक्तपूर्वा ॥

ग्रहीतारमुद्दिश्याह—**भो** इत्यादि । श्लोकान्वयि ।

**विशाले**ति । विशालवक्षाः विपुलोरस्कः । तनिमार्जितोदरः तनिम्ना कृशत्वेन अर्जितं संस्कृतं कृतसौष्ठवम् उदरं यस्य स तथाभूतः । 'अर्ज प्रतियत्ने' इति चुरादौ धातुः । 'तनुमार्जितोदरः' इति पाठान्तरे कृशविशुद्धोदर इत्यर्थः । स्थिरोन्नतांसोरुमहान् स्थिरोन्नतांसश्च ऊरुमहान् ऊर्वोर्महांश्चेति विशेषणोभयपदकर्मधारयः । कटीकृशः कट्यां श्रोण्यां कृशः अस्थूलः । एषः पुरुषः कोनुखलु ।

**बृहन्नला** — इत इतः कुमारः ।

**अभिमन्युः** — अये अयमपरः कः,

अयुज्यमानैः प्रमदाविभूषणैः करेणुशोभाभिरिवार्पितो गजः ।
लघुश्च वेषेण महानिवौजसा विभात्युमावेषमिवाश्रितो हरः ॥ ४४ ॥

**बृहन्नला** — (अपवार्य) इममिहानयता किमिदानीमार्येण कृतम् ।

अवजित इति तावद् दूषितः पूर्वयुद्धे
दयितसुतवियुक्ता शोचनीया सुभद्रा ।
जित इति पुनरेनं रुष्यते वासुभद्रो
भवतु बहु किमुक्त्वा दूषितो हस्तसारः ॥ ४५ ॥

---

येन पुरुषेण । अस्मि अहम्, अहमर्थेऽव्ययमिदम् । भुजैकयन्त्रितः सन् भुजेनैकेन संयतः सन् । इह, आहृतः आनीतः । येन बलाधिकेनापि सता मत्पीडनक्षमेणापि सतेत्यर्थः । न पीडितश्च न व्यथितश्च । किन्तु सदयमेवाङ्गेषु स्पृष्ट इत्यर्थः ॥ ४३ ॥

**इत** इत्यादि ॥

बृहन्नलामुद्दिश्याह—**अये** इत्यादि । श्लोकान्वयि ।

**अयुज्यमानैरिति** । अयुज्यमानैः पुम्भावस्फुरणादतदर्हत्वेन भासमानैरित्यर्थः । प्रमदाविभूषणैः स्त्रीसमुचितैरलङ्कारैः । अर्पित आसादितः संयोजितो वा । अत एव करेणुशोभाभिः करेणूनां गजवधूनां शोभाभिर्भूषणैः । अर्पितः, गज इव स्थितः । वेषेण बाह्येनालङ्कारेण । लघुश्च अल्पोऽपि, चशब्दोऽप्यर्थः । ओजसा आकारसूचितेन तेजोविशेषेण निमित्तेन । महानिव स्थितः महाप्रभावत्वेन सम्भाव्यमानः । अपरः मद्गृहीतृव्यतिरिक्तः । कोऽयम् । उमावेषं पार्वतीरूपम् । आश्रितः, हर इव परमेश्वर इव । विभाति शोभते । अर्पित इति गत्यर्थकान्निवृत्तप्रेषणाद् ऋधातोर्णिजन्तात् कर्मणि क्तः । उपमयोः संसृष्टिः ॥ ४४ ॥

**इममित्यादि** । किं कृतम् अनुचितं कृतमित्यर्थः । किंशब्दः कुत्सायाम् ।

अनुचितमेव विवृणोति—**अवजित इति** । पूर्वयुद्धे अभिमन्योरिदम्प्रथमे युद्धे इत्यर्थः । अवजित इति पराजित इति हेतोः । दूषितस्तावत् दूषणं प्रापित एव । अर्थादभिमन्युः । इदमेकमनुचितम् । द्वितीयं तदाह—सुभद्रा दयितसुत-

**भीमसेनः** — अर्जुन !

**बृहन्नला** — अथकिमथकिमर्जुनपुत्रोऽयम् ।

**भीमसेनः** — (अपवार्य)

जानाम्येतान् निग्रहादस्य दोषान् को वा पुत्रं मर्षयेच्छत्रुहस्ते ।
इष्टापत्त्या किन्तु दुःखे हि मग्ना पश्यत्वेनं द्रौपदीत्याहृतोऽयम् ॥ ४६ ॥

---

वियुक्ता दयितेन पूर्वम् इदानीं सुतेन च विरहिता सती । शोचनीया अनुशोचनार्हा । कृता । तृतीयमनुचितमाह—पुनः किञ्च । एनम् अभिमन्युम्, उद्दिश्येति शेषः । जित इति युद्धे परिभूत इति हेतोः । वासुभद्रः कृष्णः । रुष्यते कोपिष्यति, वर्तमानसामीप्यविवक्षया भविष्यति लट् । भवतु उक्तमनुचितत्रयं दूरेऽस्तु । बहु उक्त्वा किं बहुनोक्तेन किं प्रयोजनं, संक्षेपात् किञ्चिदन्यद् वच्मीत्यर्थः । तदेवाह— हस्तसारः दूषितः आत्महस्तबलमस्थानविनियोगेन कलङ्कितम् । महाबलेषु कीचकादिषु विनियोज्यस्य स्वबाहुसारस्य महिमा चापक्रीडाव्यापृतशिशुग्रहणे विनियोगेन ह्रापित इति तात्पर्यम् । इह रुष्यत इत्यात्मनेपदमार्षम् । कथञ्चित् कर्मवद्भावेन वा साध्यम् ॥ ४५ ॥

**अर्जुनेति** । आत्मगोपनं पुत्रसन्निधाने मा भूदिति बुद्ध्या भीमेनार्जुनो नामग्रहणेनाभिसंबोधितः ॥

करिष्यमाणं पुत्रवाचालनमात्मप्रकाशने सति घटयितुमशक्यमिति धियार्जुन आत्मप्रकाशनं परिजिहीर्षुरर्जुनशब्देऽभिमन्योः सम्बोधनपदत्वशङ्कानुत्पादाय समासावयवत्वमध्यारोपयन्नाह — **अथकिमित्यादि** । अर्जुनेत्येकदेशश्रवणेन 'अर्जुनपुत्रोऽयं किम्' इति प्रश्नवाक्ये वक्तृविवक्षामनुमितवत इवेदं प्रश्नानुरूपमुत्तरवाक्यमर्जुनस्य । एतेन नेदानीमात्मा प्रकाश्यतामिति स्वाभिप्रायो भीमसेनं प्रति सूचितो वेदितव्यः ॥

त्वदुद्भावितं दोषजातं जानतैव मया महते फलान्तरायाभिमन्युरिहानीत इत्याह—**जानामीति** । अस्य अभिमन्योः । निग्रहात् हठग्रहणात् । एतान् त्वदुक्तान् । दोषान् । जानामि सम्भावयामि । अनिष्टा च मे पुत्रस्य शत्रुवशत्वप्राप्तिरित्याह—**को वा, पुत्रं, शत्रुहस्ते** शत्रोः पुत्रप्रत्यर्थिनः हस्ते वशे स्थितमिति शेषः । **मर्षयेत्** सहेत । ग्रहणं हि पुत्रस्य तच्छत्रुवशप्राप्तिः पर्यवस्यति । तां कथमहं सहेयेति भावः । त्वदुक्तान् दोषान् जानासि, यदि च शत्रुवशप्राप्तिं पुत्रस्य न सहसे,

**बृहन्नला** — (अपवार्य) आर्य ! अभिभाषणकौतूहलं मे महत् । वाचालयत्वेनमार्यः ।

**भीमसेनः** — बाढम् । अभिमन्यो !

**अभिमन्युः** — अभिमन्युर्नाम ।

**भीमसेनः** — रुष्यत्येष मया । त्वमेवैनमभिभाषय ।

**बृहन्नला** — अभिमन्यो !

**अभिमन्युः** — कथं कथम् । अभिमन्युर्नामाहम् । भोः,

नीचैरप्यभिभाष्यन्ते नामभिः क्षत्रियान्वयाः ।
इहायं समुदाचारो ग्रहणं परिभूयते ॥ ४७ ॥

---

किमर्थमयमिहानीत इत्यत्राह—किन्तु, इष्टापत्या अपत्यवत्सला । दुःखे हि मग्ना दुःख एव केवले न्यग्भूता । द्रौपदी, एनं पुत्रं । पश्यतु, पुत्रदर्शनेन किञ्चिदाश्वसित्वित्यर्थः । इति एवं मत्वा । 'इष्टापत्त्या' इति पदम् 'अनचि च' (८-४-४७)इति तकारद्वित्वकरणेनेहापि योजयितुं शक्यम्—इष्टापत्त्या उक्तदोषेष्वनिष्टेष्वपि नान्तरीयकेष्विष्टत्वाभिमानेन, अनिष्टानामपि दोषाणामभ्युपगमेनेति यावत् । अयं पुत्रः । आहृतः आनीतः । 'आहृतो मे' इत्यपि पाठः । मे मया इति तदार्थः ॥ ४६ ॥

**आर्येत्यादि** । वाचालयतु वाचालं करोतु परिभवावसरानुगुणं किमपि प्रलापयत्वित्यर्थः । 'वाचालो बहुगर्ह्यवाक्' इत्यमरः । वाचालशब्दात् 'तत् करोति—' इति णिच् ॥

**बाढमित्यादि** । बाढम् अथकिम् ॥

**अभिमन्युरित्यादि** । नामेति क्रोधे ईर्ष्यायां वा । नीचैरुत्तमस्य नामग्रहणेनाभिभाषणमनुचितमिति क्रोधः । 'हंभोः, अभिमन्युर्नाम' इति ग्रन्थान्तरे पाठः । हंभो इति क्रोधे ॥

**रुष्यतीत्यादि** । मया हेतुना ॥

**अभिमन्यो** इति ॥

**कथमित्यादि** ।

**नीचैरिति** । नीचैरपि अधमकुलोत्पन्नैरपि । क्षत्रियान्वयाः क्षत्रियस्यान्वयो वंशो येषां ते, इति व्यधिकरणबहुव्रीहिः । क्षत्रियवंश्या इत्यर्थः । नामभिः अभिभाष्यन्ते नामनिर्देशैरभिसंबोध्यन्ते । तदिदमयुक्तमित्यमिप्रायः । इह विराटदेशे ।

**बृहन्नला** — अभिमन्यो ! सुखमास्ते ते जननी ।

**अभिमन्युः** — कथं कथम् । जननी नाम ।

किं भवान् धर्मराजो मे भीमसेनो धनञ्जयः ।
यन्मां पितृवदाक्रम्य स्त्रीगतां पृच्छसे कथाम् ॥ ४८ ॥

**बृहन्नला** — अभिमन्यो ! अपि कुशली देवकीपुत्रः केशवः ।

**अभिमन्युः** — कथं तत्रभवन्तमपि नाम्ना । अथकिम् अथकिम् । कुशली भवतः संसृष्टः ।

(उभौ परस्परमलोकयतः ।)

---

समुदाचारः सम्बोधनाविषयो जनाचारसमयः । अयम् ईदृशः किम् । ग्रहणं मम शत्रुवशप्राप्तिः । ग्रहणादिति ग्रन्थान्तरे पाठः । परिभूयते अभिभूयते किम्, नामग्रहणपूर्वकमत्सम्बोधनभङ्ग्यावहेल्यते किमित्यर्थः । उभयत्र प्रश्नकाकुः । अयं श्लोकः पूर्वाभिमन्युवाक्यादुत्तरः पठ्यते मातृकान्तरे ॥ ४७ ॥

भूयो वाचालयितुं तथैव सम्बोधयन् पृच्छति—**अभिमन्यो** इत्यादि ॥

**कथमि**त्यादि ।

**किमि**ति । यत् यस्मात् कारणात् । मां, पितृवत् मे पितृभिस्तुल्यं यथा स्यात् तथा । आक्रम्य अवज्ञाय । स्त्रीगतां स्त्रीसम्बद्धां । कथां कुशलवार्तां । पृच्छसे पृच्छसि । तस्मात्, भवान्, किं धर्मराजः, किं भीमसेनः, किं धनञ्जयः अर्जुनः । अहो परमबान्धवैककरणीये स्त्रीकुशलवृत्तान्तप्रश्ने प्रवृत्तिसाहसं कुर्वतस्ते बुद्धिकौटिल्यमिति भावः । इह 'पृच्छसे' इत्यात्मनेपदमार्षम् । 'पृच्छसि स्त्रीगतां कथाम्' इति पाठकरणं तु पाणिनीयहृद्यम् ॥ ४८ ॥

**अभिमन्यो** इत्यादि । अपि कुशली कुशलं क्षेमं तद्वान् किम् ॥

मातुलनामग्रहणमसहमान आह—**कथमि**ति । तत्रभवन्तमपि पूजनीयमपि । अर्थान्मन्मातुलं । कथं नाम्ना, गृह्णासीति योग्यक्रियाध्याहारः । अत्यन्तवामस्तव समुदाचार इत्याशयः । प्रश्नस्याधिक्षेपगर्भमुत्तरमाह—**अथकिमथकिम्** । एतच्च सावज्ञाङ्गीकारे । भवतः, संसृष्टः बन्धुः । कुशली । भवदसंसृष्ट एव भवत्संसृष्टयोग्यकुशलप्रश्नादिना भवता निर्लज्जं धृष्टं च व्यवह्रियत इति द्योतनार्थमिह संसृष्टत्वारोपः ॥

**उभावि**त्यादि ॥

**अभिमन्युः** — कथमिदानीं सावज्ञमिव मां हस्यते ।

**बृहन्नला** — न खलु किञ्चित् ।

पार्थं पितरमुद्दिश्य मातुलं च जनार्दनम् ।
तरुणस्य कृतास्त्रस्य युक्तो युद्धपराजयः ॥ ४९ ॥

**अभिमन्युः** — अलं स्वच्छन्दप्रलापेन ।

अलमात्मस्तवं कर्तुं नास्माकमुचितं कुले ।
हतेषु हि शरान् पश्य नाम नान्यद् भविष्यति ॥ ५० ॥

**बृहन्नला** — (आत्मगतम्) सम्यगाह कुमारः ।

---

**कथमित्यादि** । मां हस्यते माम् उद्दिश्य परिहस्यते । अर्थाद् युवाभ्याम् ॥

**न खल्विति** । किञ्चित् किमपि हासकारणं । न खलु नास्ति किम् । इह प्रश्नकाकुः ।

कारणमाह—**पार्थमित्यादि** । अर्जुनसूनुतायाः कृष्णभागिनेयतायास्तरुण-धानुष्कतायाश्च त्वयि विद्यमानाया युद्धजये तवानुरूपे य इदानीं **युद्धपराजयस्तवो**-पनतः, सोऽयुक्त इति कृत्वा त्वामुपहसाव इति श्लोकाभिप्रायः । युक्त इत्यत्र प्रश्नकाकुः ॥ ४९ ॥

अर्जुनसूनुत्वाद्यनुरूपो विक्रमो युद्धे दर्शित इति सप्रश्रयमाह — **अलमिति**। आत्मस्तवं कर्तुम् अलम् आत्मप्रशंसाकरणं मास्त्वित्यर्थः । मत्पराक्रमप्रकारो यदि कथयितुमारभ्यते, तर्ह्यात्मस्तवः प्रसज्येत; अतस्तत्प्रकारं वक्तुं नेच्छामीत्यभिप्रायः । अस्माकं, कुले, नोचितं न परिचितम् । आत्मस्तवं कर्तुमितीहापि सम्बध्यते । आत्मस्तवं कर्तुमस्मत्कुलीनानां परिचयो नास्तीत्यर्थः । कथं तर्हि मत्पराक्रमप्रकारो ज्ञातव्य इति चेदाह — हतेषु हि युद्धमृतेषु सैन्येषु हि । शरान् तदङ्गलग्नान् बाणान् । पश्य अवलोकय । नाम नामधेयम् अर्थाद् बाणगतम् । अन्यद् मन्नाम-धेयातिरिक्तं । न भविष्यति मन्नामधेयमेव तेषु बाणेषु दृष्टं भविष्यतीत्यर्थः । तेन युद्धहताङ्गलग्नमद्बाणगणनया मत्पराक्रमप्रकारं स्वयमनुमिमीष्वेत्यभिप्रायः । इह निषेधार्थकालंशब्दयोगे तुमुन्प्रयोग आर्षः । 'स्वयमात्मस्तवम्' इति ग्रन्थान्तरे पाठः । तथा श्लोकात् प्राग् 'अलं स्वच्छन्दप्रलापेन' इत्यधिकः पाठः ॥ ५० ॥

**सम्यगित्यादि** ।

सरथतुरगदन्तनागयौधे शरनिपुणेन न कश्चिदप्यविद्धः ।
अहमपि च परिक्षतो भवेयं यदि न मया परिवर्तितो रथः स्यात् ॥ ५१ ॥

(प्रकाशम्) एवं वाक्यशौ(डी?ण्डी)र्यम् । किमर्थं तेन पदातिना गृहीतः ।

**अभिमन्युः** —

अशस्त्रो मामभिगतस्ततोऽस्मि ग्रहणं गतः ।
न्यस्तशस्त्रं हि को हन्यादर्जुनं पितरं स्मरन् ॥ ५२ ॥

**भीमसेनः** — (आत्मगतम्)

धन्यः खल्वर्जुनो येन प्रत्यक्षमुभयं श्रुतम् ।
पुत्रस्य च पितुः श्लाघ्यं संग्रामेषु पराक्रमः ॥ ५३ ॥

---

**सरथेति** । सरथतुरगदन्तनागयौधे रथैस्तुरगैः दन्तनागैर्यौधैश्च सहिते । अर्थाद् युद्धे युद्धरङ्गे वा । शरनिपुणेन बाणसन्धानकुशलेन । अर्थात् कुमारेण । कश्चिदपि रथादिष्वन्यतमोऽपि । अविद्धः अपरिक्षतः । न, किन्तु सर्व एव रथादयो विद्धा इत्यर्थः । मया, रथः, परिवर्तितः निवर्तितः । न स्याद् यदि नाभविष्यच्चेत् । अहमपि च, परिक्षतः अर्थाच्छरनिपुणेन । भवेयम् अभविष्यम् ॥ ५१ ॥

**एवमित्यादि** । वाक्यशौण्डीर्ये वाक्ये वचसि शौण्डीर्ये गर्वः । टवर्गपञ्चमरहितमेवेदं मातृकयोः पठ्यते । एवम् ईदृशम् । क्रिया तु कुतोऽन्यथैव दृष्टेति पृच्छति—किमर्थमित्यादि । गृहीतः अर्थात् त्वम् ॥

**अशस्त्र** इति । अशस्त्रः शस्त्ररहितः सन् । माम्, अभिगतः, अर्थात् स पदातिः । ततः तेन हेतुना । ग्रहणं, गतः प्राप्तः । अस्मि । अशस्त्रोऽपि द्रोग्धुमागतः कस्माच्छस्त्रपण्डितेन भवता शस्त्रैर्न वारित इत्यत्राह—को हि कः पुमान् । तत्रापि विशेषमाह—अर्जुनं, पितरं, स्मरन् चिन्तयन् सन् । न्यस्तशस्त्रं निरायुधम् । हन्यात् । पुरुषो हि सामान्योऽपि युद्धधर्ममनुसरन् न्यस्तशस्त्रं शस्त्रेण प्रहर्तुं नार्हति, किमुत धर्मयोधिधनुर्धरमूर्धन्यस्यार्जुनस्यात्मज इति भावः ॥ ५२ ॥

**धन्य इति** । येन, पुत्रस्य अभिमन्योः । संग्रामेषु युद्धेषु । पराक्रमः, पितुः आत्मनः । संग्रामेषु पराक्रमश्च, श्लाघ्यं श्लाघार्हम् । उभयम् उभयगतं पराक्रमद्वयमित्यर्थः । प्रत्यक्षं साक्षात् । श्रुतम् आकर्णितम् । इदानीं पुत्रमुखादित्यार्थम् । सः अर्जुनः । धन्यः खलु कृतार्थ एव ॥ ५३ ॥

**राजा** — त्वर्यतां त्वर्यतामभिमन्युः ।

**बृहन्नला** — इत इतः कुमारः । एष महाराजः । उपसर्पतु कुमारः ।

**अभिमन्युः** — आः कस्य महाराजः ।

**बृहन्नला** — न, न, न । ब्राह्मणेन सहास्ते ।

**अभिमन्युः** — ब्राह्मणेनेति । (उपगम्य) भगवन्! अभिवादये ।

**भगवान्** — एह्येहि वत्स !

शौण्डीर्यं धृतिविनयं दयां स्वपक्षे माधुर्यं धनुषि जयं पराक्रमं च ।
एकस्मिन् पितरि गुणानवाप्नुहि त्वं शेषाणां यदपि च रोचते चतुर्णाम् ॥

**अभिमन्युः** — अनुगृहीतोऽस्मि ।

---

**त्वर्यतामि**त्यादि । त्वर्यतां त्वरितमानीयतामित्यर्थः ॥

**इत इ**त्यादि ॥

**आ इ**त्यादि । आः कोपे ॥

**नेत्या**दि । क्रोधाविष्करणस्य त्रिः प्रतिषेधः नननेति । ब्राह्मणेन ब्रह्मविदा संन्यासिनेत्यर्थः । सह, आस्ते, अर्थान्महाराजः । ब्राह्मणसन्निधौ विनीतेन व्यवहर्तव्यमित्यभिप्रायः ॥

**ब्राह्मणेने**तीत्यादि । ब्राह्मणेनेति आहेति शेषः । अतो मया विनीतेन वर्तितव्यमित्याशयः ॥

**एही**त्यादि ।

**शौण्डीर्यमि**ति । त्वं, शौण्डीर्यं शौण्डीरो वीरस्तस्य भावं शौण्डीर्यम् । धृतिविनयं धृतिर्धैर्यं, विनयः प्रश्रयः तयोः समाहारम् । स्वपक्षे स्वजने । दयां, माधुर्यं प्रियभाषित्वम् । धनुषि धनुर्व्यापारे । जयं, पराक्रमं च तेजश्च । एकस्मिन् पितरि गुणान् एकस्मिन् जनकेऽर्जुने विद्यमानान् इमान् गुणान् । अवाप्नुहि लभस्व । शेषाणाम् अन्येषां । चतुर्णाम् अर्थात् पितॄणां । यदपिच, शेषपितृसम्बन्धि यच्च सद्गुणरूपं वस्त्वित्यर्थः । रोचते शोभते, अनुकार्यत्वेन तुभ्यं स्वदते वा । तच्चावाप्नुहीति तत्पदाध्याहारेण सम्बन्धः ॥ ५४ ॥

**अन्वि**त्यादि ॥

**राजा** — एह्येहि पुत्र! । कथं न मामभिवादयसि । अहो उत्सिक्तः खल्वयं क्षत्रियकुमारः । भवतु, अहमस्य दर्पप्रशमनं करोमि । अथ केनायं गृहीतः ।

**भीमसेनः** — महाराज! मया ।

**अभिमन्युः** — अशस्त्रेणेत्यभिधीयताम् ।

**भीमसेनः** — शान्तं शान्तं पापम् ।

सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ ।
तावाश्रित्य प्रयुध्येयं दुर्बलैर्गृह्यते धनुः ॥ ५५ ॥

**अभिमन्युः** — मा तावद् भोः,

बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः ।
किं भवान् मध्यमस्तातस्तस्यैतत् सदृशं वचः ॥ ५६ ॥

**भगवान्** — पुत्र! कोऽयं मध्यमो नाम ।

---

**एह्ीत्यादि** । उत्सिक्तः गर्वितः । अथशब्दः प्रश्ने ॥

**महाराजेत्यादि** ॥

**अशस्त्रेणेत्यादि** । अशस्त्रेण न्यस्तशस्त्रेण । सशस्त्रेण त्वहं शस्त्रकर्मनिपुणतमो न केनापि ग्रहीतुं शक्य इति विराटं बोधयितुमिदमुक्तम् ॥

शस्त्रग्रहणवार्तैव तावद् दुर्बलविषयत्वान्मादृशमहाबलपुरुषश्रवणानर्हेत्यभिप्रायेणाह — **शान्तमित्यादि** । पापं दुर्बलोचितवाक्यश्रवणसमुत्थं दुरितं, शान्तं, भवत्विति शेषः । अथवा अशस्त्रेणेति वाक्यमेव दुर्बलविषयत्वेन दुष्टत्वात् पापमित्युच्यते । तत् पापवाक्यं शान्तं विरतं भवतु । भूयस्तन्मा वादीरित्यभिप्रायः ।

**सहजावित्यादि** । भूजौ, प्रहरणम् आयुधं । वेदाः प्रमाणमितिवदेकत्वं विधेये बोद्धव्यम् । प्रहरणाविति ग्रन्थान्तरे पाठः । स तु लिङ्गविरोधादुपेक्ष्यः ॥ ५५ ॥

**मा तावदिति** भीमोक्तशूरवादप्रतिषेधः ।

**बाहुरित्यादि** । अक्षौहिणी सेनापरिमाणविशेषः* । बाहोरक्षौहिणीत्वरूपणं तत्कार्यकारित्वप्रतिपत्त्यर्थम् । मध्यमस्तात इत्यत्र स इत्याक्षेपलभ्यम् । तस्य मध्यमतातस्य । इदं वचः 'सहजौ मे' इत्यादिः शूरवादः ॥ ५६ ॥

**पुत्रेत्यादि** ॥

---

* एकेभैकरथत्र्यश्वपञ्चपदातिकसैन्यरूपाः २१८७० पत्तयः ।

**अभिमन्युः** — श्रूयताम् । अथवा, नन्वनुत्तरा वयं ब्राह्मणेषु, साध्वन्यो ब्रूयात् ।

**राजा** — भवतु भवतु मद्वचनात् । पुत्र ! कोऽयं मध्यमो नाम ।

**अभिमन्युः** — श्रूयताम् । येन,

योक्त्रयित्वा जरासन्धं कण्ठश्लिष्टेन बाहुना ।
असह्यकर्म तत् कृत्वा नीतः कृष्णोऽतदर्हताम् ।। ५७ ।।

**राजा** —

न ते क्षेपेण रुष्यामि रुष्यता भवता रमे ।
किमुक्त्वा नापराद्धोऽहं कथं तिष्ठति यात्विति ।। ५८ ।।

---

**श्रूयतामि**त्यादि । श्रूयतां भवत्प्रश्नस्योत्तरमिति शेषः । विवक्षितस्योत्तरस्योद्धतार्थताम्, अत एव ब्राह्मणसन्निधावनुपन्यसनीयतां चाभिसमीक्ष्याह—अथवेत्यादि । अनुत्तराः न विद्यते उत्तरं प्रतिवचनं प्रतिवचनमात्रस्यावर्जनीयतया सामर्थ्यादुद्धतार्थकं प्रतिवचनमिह गृह्यते, तन्न विद्यते येषां ते अनुत्तराः । साध्वन्यो ब्रूयात् अन्यो यदि वदेत्, तत् समीचीनं स्यादित्यर्थः ।।

**भवत्वि**त्यादि ।।

**श्रूयतामि**ति । येनेति श्लोकान्वयि ।

**योक्त्रयित्वे**ति । येन कर्त्रा । जरासन्धं बार्हद्रथं राजविशेषं । **कण्ठश्लिष्टेन** तत्कण्ठसंसक्तेन बाहुना स्वभुजेन । योक्त्रयित्वा योक्त्रवन्तं कृत्वा योक्त्रं वृषभस्कन्धयुगयोजनसाधनभूता रज्जुः । भुजेनैव योक्त्रस्थानीयेन बद्ध्वेत्यर्थः । तुलयित्वेति पाठान्तरम् । असह्यम् असहनीयं । तत् कर्म जरासन्धवधरूपं । कृत्वा, कृष्णः, अतदर्हतां जरासन्धवधानर्हत्वं । नीतः प्रापितः । कृष्णो हि बहुकृत्वः प्रागात्मना कृताभियोगं जरासन्धं स्वयं हन्तुमर्हतीति जरासन्धवधः कृष्णस्य भागधेयं; तद् येन शूरेणात्मसात्कृतं, स मे मध्यमस्तात इति भावः ।। ५७ ।।

**नेति** । ते क्षेपेण त्वत्कृतयास्मन्निन्दया । न रुष्यामि । रुष्यता कुप्यता भवता हेतुना । अहं, रमे प्रीये । प्रीतिकार्यमाह—कथं तिष्ठति, अर्थात् क्षेपरोधाभ्यामस्मास्वपराधी भवान् । यातु अस्मदन्तिकादपसरतु । इति एवम् । उक्त्वा, अहं, किं नापराद्धः 'कथं तिष्ठती'त्यादिवचनरूपमपराधं कृतो न कृतवान् अपि

**राजा** — एह्येहि पुत्र ! । कथं न मामभिवादयसि । अहो उत्सिक्तः खल्वयं क्षत्रियकुमारः । भवतु, अहमस्य दर्पप्रशमनं करोमि । अथ केनायं गृहीतः ।

**भीमसेनः** — महाराज ! मया ।

**अभिमन्युः** — अशस्त्रेणेत्यभिधीयताम् ।

**भीमसेनः** — शान्तं शान्तं पापम् ।

सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ ।
तावाश्रित्य प्रयुध्येयं दुर्बलैर्गृह्यते धनुः ॥ ५५ ॥

**अभिमन्युः** — मा तावद् भोः,

बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः ।
किं भवान् मध्यमस्तातस्तस्यैतत् सदृशं वचः ॥ ५६ ॥

**भगवान्** — पुत्र ! कोऽयं मध्यमो नाम ।

---

एहीत्यादि । उत्सिक्तः गर्वितः । अथशब्दः प्रश्ने ॥

**महाराजेत्यादि** ॥

**अशस्त्रेणेत्यादि** । अशस्त्रेण न्यस्तशस्त्रेण । सशस्त्रेण त्वहं शस्त्रकर्मनिपुणतमो न केनापि ग्रहीतुं शक्य इति विराटं बोधयितुमिदमुक्तम् ॥

शस्त्रग्रहणवार्तैव तावद् दुर्बलविषयत्वान्मादृशमहाबलपुरुषश्रवणानर्हेत्यभिप्रायेणाह — **शान्तमित्यादि** । पापं दुर्बलोचितवाक्यश्रवणसमुत्थं दुरितं, शान्तं, भवत्विति शेषः । अथवा अशस्त्रेणेति वाक्यमेव दुर्बलविषयत्वेन दुष्टत्वात् पापमित्युच्यते । तत् पापवाक्यं शान्तं विरतं भवतु । भूयस्तन्मा वादीरित्यभिप्रायः ।

**सहजावित्यादि** । भूजौ, प्रहरणम् आयुधं । वेदाः प्रमाणमितिवदेकत्वं विधेये बोद्धव्यम् । प्रहरणाविति ग्रन्थान्तरे पाठः । स तु लिङ्गविरोधादुपेक्ष्यः ॥ ५५ ॥

**मा तावदिति** भीमोक्तशूरवादप्रतिषेधः ।

**बाहुरित्यादि** । अक्षौहिणी सेनापरिमाणविशेषः* । बाहोरक्षौहिणीत्वरूपणं तत्कार्यकारित्वप्रतिपत्त्यर्थम् । मध्यमस्तात इत्यत्र स इत्याक्षेपलभ्यम् । तस्य मध्यमतातस्य । इदं वचः 'सहजौ मे' इत्यादिः शूरवादः ॥ ५६ ॥

**पुत्रेत्यादि** ॥

---

* एकैकरथत्र्यश्वपञ्चपदातिकसैन्यरूपाः २१८७० पत्तयः ।

**अभिमन्युः** — श्रूयताम् । अथवा, नन्वनुत्तरा वयं ब्राह्मणेषु, साध्वन्यो ब्रूयात् ।

**राजा** — भवतु भवतु मद्वचनात् । पुत्र ! कोऽयं मध्यमो नाम ।

**अभिमन्युः** — श्रूयताम् । येन,

योक्त्रयित्वा जरासन्धं कण्ठश्लिष्टेन बाहुना ।
असह्यकर्म तत् कृत्वा नीतः कृष्णोऽतदर्हताम् ॥ ५७ ॥

**राजा** —

न ते क्षेपेण रुष्यामि रुष्यता भवता रमे ।
किमुक्त्वा नापराद्धोऽहं कथं तिष्ठति यात्विति ॥ ५८ ॥

---

**श्रूयतामित्यादि** । श्रूयतां भवत्प्रश्नस्योत्तरमिति शेषः । विवक्षितस्योत्तरस्योद्धतार्थताम्, अत एव ब्राह्मणसन्निधावनुपन्यसनीयतां चाभिसमीक्ष्याह—अथवेत्यादि । अनुत्तराः न विद्यते उत्तरं प्रतिवचनं प्रतिवचनमात्रस्यावर्जनीयतया सामर्थ्यादुद्धतार्थकं प्रतिवचनमिह गृह्यते, तन्न विद्यते येषां ते अनुत्तराः । साध्वन्यो ब्रूयात् अन्यो यदि वदेत्, तत् समीचीनं स्यादित्यर्थः ॥

**भवत्वित्यादि** ॥

**श्रूयतामिति** । येनेति श्लोकान्वयि ।

**योक्त्रयित्वेति** । येन कर्त्रा । जरासन्धं बार्हद्रथं राजविशेषं । **कण्ठश्लिष्टेन** तत्कण्ठसंसक्तेन बाहुना स्वभुजेन । योक्त्रयित्वा योक्त्रवन्तं कृत्वा योक्त्रं वृषभस्कन्धयुगयोजनसाधनभूता रज्जुः । भुजेनैव योक्त्रस्थानीयेन बद्ध्वेत्यर्थः । तुलयित्वेति पाठान्तरम् । असह्यम् असहनीयं । तत् कर्म जरासन्धवधरूपं । कृत्वा, कृष्णः, अतदर्हतां जरासन्धवधानर्हत्वं । नीतः प्रापितः । कृष्णो हि बहुकृत्वः प्रागात्मना कृताभियोगं जरासन्धं स्वयं हन्तुमर्हतीति जरासन्धवधः कृष्णस्य भागधेयं; तद् येन शूरेणात्मसात्कृतं, स मे मध्यमस्तात इति भावः ॥ ५७ ॥

**नेति** । ते क्षेपेण त्वत्कृतयास्मन्निन्दया । न रुष्यामि । रुष्यता कुप्यता भवता हेतुना । अहं, रमे प्रीये । प्रीतिकार्यमाह—कथं तिष्ठति, अर्थात् क्षेपरोषाभ्यामस्मास्वपराधी भवान् । यातु अस्मदन्तिकादपसरतु । इति एवम् । उक्त्वा, अहं, किं नापराद्धः 'कथं तिष्ठती'त्यादिवचनरूपमपराधं कृतो न कृतवान् स्विदि-

**अभिमन्युः** — यद्यहमनुग्राह्यः,

पादयोः समुदाचारः क्रियतां निग्रहोचितः ।
बाहुभ्यामाहृतं भीमो बाहुभ्यामेव नेष्यति ॥ ५९ ॥

(ततः प्रविशत्युत्तरः ।)

**उत्तरः** —

मिथ्याप्रशंसा खलु नाम कष्टा येषां तु मिथ्यावचनेषु भक्तिः ।
अहं हि युद्धाश्रयमुच्यमानो वाचानुवर्ती हृदयेन लज्जे ॥ ६० ॥

---

षयप्रीतिवशादेव न कृतवानित्यभिप्रायः । अथवा किमुक्त्वेत्यत्र भवेयमिति शेषः । इत्युक्त्वा अहमपराद्धः किं न भवेयमिति योज्यम् । इति यद्यहं ब्रूयां तर्हि त्वय्यपराधी भवेयमेवेति भावः ॥ ५८ ॥

विराटप्रीतेरात्ममोचने आत्मपक्ष्यैककरणीये पर्यवसानमात्मलाघवावहत्वान्मा भूदिति बुद्ध्या स्वीयलोकोत्तरधीरभावसदृशमाह—**यदीत्यादि** ।

**पादयोरिति** । निग्रहोचितः मद्ग्रहणानुरूपः । पादयोः, समुदाचारः निगलबन्धनरूपः । क्रियतां न पुनर्मयि प्रीतिमता भवता मत्पादसमुदाचारः परिह्रियतां मन्मोचनं वा क्रियतामित्यभिप्रायः । कथं तर्हि मोचनं तव भविष्यतीत्यत्राह— भीमः, बाहुभ्याम्, आहृतम् आनीतम् । अर्थान्माम्, बाहुभ्यामेव नेष्यति । स एव भवत्कृतस्य मद्विप्रकारस्य सदृशप्रतीकारशक्तो निष्क्रयं करिष्यतीति नापेक्षणीया मे भवत्प्रीतिरिति भावः ॥ ५९ ॥

इत्थमभिमन्युवाचालने तद्गतशौर्यविनयपितृभक्तिचित्तसमुन्नतिधैर्यादिगुणप्रकाशनसुभगे युधिष्ठिराद्यानन्ददायिनि वर्तमाने उत्तरं प्रवेशयति—**तत इत्यादि**। पूर्वप्रक्रान्तयोधपुरुषपूजानसाने बृहन्नलाजयवृत्तान्ततत्त्वं पित्रे निवेदयितुकामस्येदं पितृपार्श्वागमनमुत्तरस्य ।

**मिथ्येति** । येषां तु, मिथ्यावचनेषु मिथ्यावादभूयिष्ठत्वात् स्तुतय इह मिथ्यावचनशब्देन लक्ष्यन्ते, स्तुतिष्वित्यर्थः । भक्तिः परमादरः, अर्थात् स्तुतिपठनविषयः । तेषामित्याक्षेपलभ्यं, तेषां वन्दिनामित्यर्थः । मिथ्याप्रशंसा तत्कर्तृका असत्यार्थविषया श्लाघा । कष्टा खलु नाम दुःखकारिण्येव । इममर्थं प्रकृतविशेषेण समर्थयते—**हि तथाहि** । युद्धाश्रयं युद्धसम्बद्धम् । उच्यमानः 'अहो तव प्रतापः,

(उपसृत्य) भगवन्! अभिवादये ।

**भगवान्** — स्वस्ति ।

**उत्तरः** — तात! अभिवादये ।

**राजा** — एह्येहि पुत्र! आयुष्मान् भव । पुत्र! पूजिताः कृतकर्माणो योधपुरुषाः ।

**उत्तरः** — पूजिताः । पूज्यतमस्य क्रियतां पूजा ।

**राजा** — पुत्र! कस्मै ।

**उत्तरः** — इहात्रभवते धनञ्जयाय ।

**राजा** — कथं धनञ्जयायेति ।

---

येन कौरवान् जितवानसि' इत्यादिरीत्या वन्दिभिः स्तूयमान इत्यर्थः । अहं, वाचानुवर्ती सन् वाङ्मात्रेण तद्वचनमङ्गीकुर्वन् सन् । हृदयेन मनसा, लज्जे लज्जा-निमित्तां व्यथामनुभवामीत्यर्थः । लज्जीति पाठे लज्जाशब्दान्मत्वर्थीय इनिप्रत्ययः । लज्जाकरं हि वन्दिक्रियमाणमात्ममिथ्याश्लाघनम् 'अर्जुन एव कौरवविजयी, न त्वहम्' इति भूतार्थाख्यानेन प्रतिषेद्धुमिच्छतापि मयार्जुनवृत्तान्तरहस्यानुद्भेदाय तदेतदगत्याङ्गीकर्तव्यमेव वर्तते । किं करोमीति भावः ॥ ६० ॥

**भगवन्नित्यादि** ॥

**स्वस्तीति** ॥

**तातेत्यादि** ॥

**एह्येहीत्यादि** । पूजिता इत्यत्र काकुः, किं पारितोषिकदानेन बहुमानिता इत्यर्थः ॥

**पूजिता इत्यादि** । क्रियताम् अर्थात् तातेनैव ॥

**पुत्रेत्यादि** ॥

अज्ञातवासस्य निस्तीर्णत्वात् स्वपितरि अर्जुनतत्त्वावेदनमिदानीं प्राप्तकालमिति मत्वाह — **इहेत्यादि** । इहेत्यर्जुनाधिष्ठितस्थलनिर्देशः । वर्तमानायेति शेषः ॥

**कथमिति** । धनञ्जयायेति कथं ब्रवीषीति शेषः । धनञ्जयस्यात्र कः प्रसङ्ग इत्यभिप्रायः ॥

**उत्तरः** — अथकिम् । अत्रभवता,

श्मशानाद्धनुरादाय तूणी चाक्षयसायके ।
नृपा भीष्मादयो भग्ना वयं च परिरक्षिताः ॥ ६१ ॥

**राजा** — एवमेतत् ।

**बृहन्नला** — प्रसीदतु प्रसीदतु महाराजः ।

अयं बाल्यात्तु सम्भ्रान्तो न वेत्ति प्रहरन्नपि ।
कृत्स्नं कर्म स्वयं कृत्वा परस्येत्यवगच्छति ॥ ६२ ॥

**उत्तरः** — व्यपनयतु भवाञ्छङ्काम् । इदमाख्यास्यते,

---

**अथकिमिति** । धनञ्जयायैव, अत्रान्यथाशङ्कां मा कृथा इति भावः । अत्रभवतेति श्लोकान्वयि ।

**श्मशानादित्यादि** । तूणी तूण्यौ ॥ ६१ ॥

**एवमिति** । एतद् एवम् युद्धवृत्तमीदृशं, मया त्वन्यथेति भ्रान्तमित्यर्थः ॥

**प्रसीदत्वित्यादि** । प्रसीदतु मद्वक्ष्यमाणप्रकारेण युद्धवृत्तमवगन्तुमित्यार्थम् ।

**अयमिति** । बाल्यात्, सम्भ्रान्तः अतिव्यग्रः । अयं तु उत्तरस्तु । प्रहरन्नपि परान् निघ्नन्नपि सन् । न वेत्ति प्रहरन्तमात्मानं नाबुध्यतेत्यर्थः । अत एव, कृत्स्नं समस्तं । कर्म युद्धवृत्तं । स्वयं कृत्वा, परस्येति तत् कृत्स्नं कर्म परसम्बन्धीति । अवगच्छति जानाति । रणसमये सम्भ्रमावेशवशादात्मानं विस्मृत्य दर्शितपराक्रमस्यास्य स्वकृतेऽपि शत्रुविजये मत्कृतत्वभ्रमो जात इति भावः । सोऽयमभूतार्थ आत्मगोपनानुगुणः । भूतार्थोऽपि त्विह गर्भितः । तद्यथा — अयं प्रहरन्नपि प्रहर्तुं योद्धुं यतमानोऽपि । युद्धरङ्गसन्निधानमिह यत्नः । बाल्याद् युद्धाप्रागल्भ्यात् । सम्भ्रान्तः त्रस्तः सन् । न वेत्ति नाबुध्यत, अर्थाद् इतिकर्तव्यताम् । अत एव स्वयं, कृत्स्नं कर्म धार्तराष्ट्रविद्रावणान्तं सर्वं युद्धव्यापारं । परस्य कृत्वा, स्वस्य तन्निर्वहणाशक्तत्वाद् अन्यस्य मम सम्बन्धिनं कृत्वा मन्निर्व्यूढत्वेन मदधीनं कृत्वेति यावत् । इति एवं 'नृपा भीष्मादयो भग्नाः'(श्लो.६१)इत्युक्तप्रकारेणेत्यर्थः । अवगच्छति जानाति । मत्कृतं कृतज्ञत्वान्नापलपतीत्यभिप्रायः ॥ ६२ ॥

**व्यपनयत्वित्यादि** । व्यपनयतु तत्त्वाख्यानेनापनुदतु । किमर्थमिदानीमप्यात्मस्वरूपमवच्छाद्यत इति भावः । इदमित्यादि श्लोकान्वयि ।

प्रकोष्ठान्तरसंगूढं गाण्डीवज्याहतं किणम् ।
यत्तद् द्वादशवर्षान्ते नैव याति सवर्णताम् ॥ ६३ ॥

**बृहन्नला** —

एतन्मे पारिहार्याणां व्यावर्तनकृतं किणम् ।
सन्निरोधविवर्णत्वाद् गोधास्थानमिहागतम् ॥ ६४ ॥

**राजा** — पश्यामस्तावत् ।

**बृहन्नला** —

---

**प्रकोष्ठे**ति । प्रकोष्ठान्तरसंगूढं प्रकोष्ठान्तरे मणिबन्धावकाशे संगूढं । गाण्डीवज्याहतं गाण्डीवज्यया गाण्डीवाख्यधनुर्मौर्व्या आहतम् आघातेनोत्पादितमित्यर्थः । एतेन ज्याघातस्थानस्थितत्वं किणस्योक्तम् । इदं प्रत्यक्षदृश्यं । किणं रूढव्रणपदम् । आख्यास्यते कथयिष्यति, अर्थाद् भवत्तत्त्वम् । किणं विशिनष्टि—यत्तत् पूर्वप्रसिद्धं यत् किणं । द्वादशवर्षान्ते इह द्वादशवर्षशब्दो ज्याघातविश्रान्तिकालबाहुल्योपलक्षणार्थः । द्वादशवर्षाणाम् अन्ते, विश्रान्तज्याव्यापाराणां बहूनां वर्षाणाम् अतिक्रमेऽपीत्यर्थः । सवर्णतां देहतुल्यवर्णतां प्रकोष्ठतुल्यवर्णतां वा । न याति न प्राप्नोति । एतेन किणस्यात्युल्बणत्वमनपलपनीयत्वनिमित्तमुक्तम् । अनुल्बणो हि अङ्गे किणः स्वल्पेन कालेन स्वगतं वैवर्ण्यं हित्वा देहसावर्ण्यं प्राप्नोति, उल्बणस्तु विवर्ण एवातिचिरमवतिष्ठते । किणशब्दस्य क्लीबत्वमत एव प्रयोगात् ॥ ६३ ॥

किणस्यान्यथासिद्धिमाह—**एतदि**ति । इह हस्ते । मे, पारिहार्याणां वलयानां । सन्निरोधविवर्णत्वात् सन्निरोधेन सम्यङ्निरोधेन विवर्णत्वात् विवर्णत्वमासाद्य । ल्यब्लोपे पञ्चमी । गोधास्थानं गोधाया ज्याघातवारणस्य स्थानं प्रकोष्ठदेशमित्यर्थः । आगतं प्राप्तम् । एतत् किणम् । पारिहार्याणां, व्यावर्तनकृतं व्यावर्तनेन विविधपरिवर्तनेन कृतं जनितम् । गोधास्थानगतोऽयं किणः पारिहार्यव्यावर्तनजनितः पारिहार्यसन्निरोधजनितवैवर्ण्यश्चेति भावः । वलयव्यावर्तनकृतोऽपि किणः ज्याघातकिणेन सह हस्ते वस्तुतोऽस्त्येवेति तदाश्रयमिदमर्जुनवचनं नासत्यमिति बोद्धव्यम् । 'आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्' इत्यमरः ॥ ६४ ॥

**पश्याम इ**ति । तावद् आदौ । पश्यामः परीक्षामहे अर्थात् किणम् । पश्चात्तु तस्य कारणं निश्चिनुम इत्याशयः ॥

रुद्रबाणावलीढाङ्गो यद्यहं भारतोऽर्जुनः ।
सुव्यक्तं भीमसेनोऽयमयं राजा युधिष्ठिरः ॥ ६५ ॥

**राजा** — भो धर्मराज! वृकोदर! धनञ्जय! कथं न मां विश्वसिथ । भवतु भवतु प्राप्तकाले । बृहन्नले! प्रविश त्वमभ्यन्तरम् ।

**बृहन्नला** — यदाज्ञापयति महाराजः ।

**भगवान्** — अर्जुन! नखलु नखलु प्रवेष्टव्यम् । तीर्णप्रतिज्ञा वयम् ।

**अर्जुनः** — यदाज्ञापयत्यार्यः ।

**राजा** —

---

तत्त्वस्य परीक्षणप्रसङ्गे गोपनमशक्यमंचमत्कारि चेति मत्वात्मनोऽर्जुनत्वं सिद्धाभ्युपगमभङ्ग्यानुवदन् भ्रातरावपि तत्त्वतः प्रकाशयति—**रुद्रे**त्यादि । रुद्रबाणावलीढाङ्गः परमेश्वरशरस्पृष्टगात्रः । पुरा पाशुपतास्त्रलिप्सया तपस्यतोऽर्जुनस्य किरातवेषेण भगवता सह युद्धमासीदिति कथात्रानुसन्धेया । सुव्यक्तमित्यस्य स्थाने अव्यक्तमिति ग्रन्थान्तरेऽपपाठः ॥ ६५ ॥

**भो** इत्यादि । न विश्वसिथ आत्मगोपनं ह्यविश्वासकार्यमिति भावः । अज्ञातवासस्यानिस्तीर्णत्वशङ्कयाह—प्राप्तकाले योग्ये काले अज्ञातवासनिस्तारोत्तरकाले । भवतु भवतु, अर्थाद् धर्मराजेत्यादिव्यवहारः । अभ्यन्तरम् अन्तःपुरम् ॥

**यदि**त्यादि । अज्ञातवासस्यानिस्तीर्णत्वशङ्कार्येणैव प्रमाणभूतेन निरस्यतामित्यर्जुनस्याभिप्रायः । मातृकान्तरे 'प्राप्तकाले' इत्येतदनन्तरम् एवं पाठो दृश्यते — 'भगवान् — बृहन्नले! प्रविश त्वमभ्यन्तरम् । बृहन्नला — यदाज्ञापयति भगवान् ।' इति । एष तु न समीचीनः ॥

**अर्जुने**त्यादि । तीर्णप्रतिज्ञाः तीर्णा सम्यगनुष्ठानेन पारं नीता प्रतिज्ञा अज्ञातवाससंविद् यैस्ते तथाभूताः । अतोऽस्माकमात्मप्रकाशनं प्राप्तकालमेवेति भावः । प्रवेष्टव्यमित्यस्य स्थाने 'गन्तव्यम्' इति मातृकान्तरे पठ्यते; वयमित्यस्य स्थाने 'स्मः' इति च ॥

**यदि**त्यादि ॥

शूराणां सत्यसन्धानां प्रतिज्ञां परिरक्षताम् ।
पाण्डवानां निवासेन कुलं मे नष्टकल्मषम् ॥ ६६ ॥

**अभिमन्युः**——इहात्रभवन्तो मे पितरः । तेन खलु,

न रुष्यन्ति मया क्षिप्ता हसन्तश्च क्षिपन्ति माम् ।
दिष्ट्या गोग्रहणं स्वन्तं पितरो येन दर्शिताः ॥ ६७ ॥

(भीमसेनमुद्दिश्य) भोस्तात !

अज्ञानात्तु मया पूर्वं यद् भवान् नाभिवादितः ।
तस्य पुत्रापराधस्य प्रसादं कर्तुमर्हसि ॥ ६८ ॥

**भीमसेनः**——एह्येहि पुत्र ! पितृसदृशपराक्रमो भव ।

**अभिमन्युः**——अनुगृहीतोऽस्मि ।

**भीमसेनः**——पुत्र ! अभिवादयस्व पितरम् ।

**अभिमन्युः**——भोस्तात ! अभिवादये ।

**अर्जुनः**——एह्येहि वत्स ! (आलिङ्ग्य)

---

**शूराणा**मित्यादि । कुलं गृहं वंशो वा । 'अद्य मे सत्कृतं कुलम्' इति चतुर्थपादो मातृकान्तरे पठ्यते । अस्मिन् पाठे विसन्धिता प्रसज्यते ॥ ६६ ॥

**इहे**त्यादि । इह, वसन्तीति शेषः ।

**न रुष्यन्ती**त्यादि । क्षिप्ताः निन्दिताः । स्वन्तं शोभनावसानम् ॥ ६७ ॥

अनभिवादनावज्ञातयोस्तातयोर्ज्येष्ठमौचित्यादादौ प्रसादयति—**भो** इत्यादि ।

**अज्ञाना**दित्यादि । तस्य अनभिवादनरूपस्य । इह 'इति प्रणामति' इति कविवाक्यमपेक्षितम् ॥ ६८ ॥

**एही**त्यादि ॥

**अन्वि**त्यादि । इदं वाक्यं ग्रन्थान्तरे न पठ्यते ॥

**पुत्रे**त्यादि । पितरम् अर्जुनम् ॥

**भो** इत्यादि ॥

**एही**त्यादि । वत्सेत्यस्य स्थाने 'पुत्र!' इति ग्रन्थान्तरे पठ्यते । 'आलिङ्ग्य' इति च तत्र न पठ्यते ॥

अयं स हृदयह्लादी पुत्रगात्रसमागमः ।
यस्त्रयोदशवर्षान्ते प्रोषितः पुनरागतः ॥ ६९ ॥

पुत्र ! अभिवाद्यतां विराटेश्वरः ।

**अभिमन्युः** — अभिवादये ।

**राजा** — एह्येहि वत्स !

यौधिष्ठिरं धैर्यमवाप्नुहि त्वं भैमं बलं नैपुणमर्जुनस्य ।
माद्रीजयोः कान्तिमथाभिरूप्यं कीर्तिं च कृष्णस्य जगत्प्रियस्य ॥ ७० ॥

(आत्मगतम्) उत्तरासन्निकर्षस्तु मां बाधते । किमिदानीं करिष्ये । भवतु, दृष्टम् । कोऽत्र ।

---

**अयमित्यादि** । अयम् अनुभूयमानः पुत्रगात्रसमागमः पुत्राङ्गपरिष्वङ्गः । 'यत्तद् द्वादशवर्षान्ते' इति ग्रन्थान्तरीयः पाठस्त्वसमञ्जसः ॥ ६९ ॥

**पुत्रेत्यादि** ॥

**अभिवादय इति** ॥

**एह्रीत्यादि** ।

**यौधिष्ठिरमित्यादि**। यौधिष्ठिरं युधिष्ठिरसम्बन्धि। भैमं भीमसम्बन्धि । अर्जुनस्य नैपुणम् अर्जुनसम्बन्धि युद्धकौशलं, नानाकलाकौशलं वा। माद्रीजयोः माद्रीपुत्रयोर्नकुलसहदेवयोः । 'माद्रीसुताद् ' इति ग्रन्थान्तरपाठे तन्त्रेण तयोर्ग्रहणं वाच्यम्। तच्च क्लिष्टम् । कान्ति शोभाम् । अथ आभिरूप्यं सुधीत्वं च । अथशब्दः समुच्चये। रूपे हि नकुलः प्रख्यातः, बुद्धौ च सहदेवः । कृष्णस्य, कीर्ति यशश्च ॥ ७० ॥

**उत्तरेति** । उत्तरासंनिकर्षस्तु उत्तरया मत्कन्यया सह संनिकर्षः आसन्नतरः परिचयस्तु, अर्थादर्जुनस्य । मां, बाधते 'अर्जुनेन उत्तरायाश्चारित्रं दूषितम्, आहोस्विन्न दूषितम्, अदूषितेऽपि वा तस्मिन् कः प्रत्ययं कुर्वन् कन्यार्थी तां स्वीकरिष्यती'त्येतादृशचिन्तोत्पादनेन व्यथयति । इदानीम् अस्यां दुःखावस्थायां । किं करिष्ये कीदृशं प्रतिविधानमारप्स्ये । भवतु तद्विषया चिन्ता मास्तु । दृष्टं प्रतिविधानं मद्बुद्धौ प्रतिभातमित्यर्थः । तदेतत् क्रिययैव प्रकाशयिष्यन् परिजनमाह्वयति—**कोऽत्रेति** । इयं प्रकाशोक्तिः । क इत्यतः प्राग् 'अयमत्र प्राप्तकाल' इति पठ्यते मातृकान्तरे ॥

(प्रविश्य)

**भटः** — जयतु महाराजः ।

**राजा** — आपस्तावत् ।

**भटः** — यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) इमा आपः ।

**राजा** — (प्रतिगृह्य) अर्जुन ! गोग्रहणविजयशुल्कार्थं प्रतिगृह्यतामुत्तरा ।

**भगवान्** — एतदवनतं शिरः ।

**अर्जुनः** — (आत्मगतम्) कथं चारित्रं मे तुलयति । (प्रकाशम्) भो राजन् !

---

जयत्वित्यादि ॥

आप इति । आपस्तावत्, आनीयन्तामिति शेषः ॥

यदित्यादि । आपः, आनीता इति शेषः ॥

अर्जुनेत्यादि । अर्जुन ! गोग्रहणविजयशुल्कार्थं गोग्रहणविजय एव शुल्कं कन्याविवाहनिमित्तं वरसकाशग्राह्यं धनं तस्मै । उत्तरा, प्रतिगृह्यतां स्वीक्रियताम् । गोग्रहणविजयो हि भवता मह्यं यो दत्तः, स मया मत्कन्याशुल्कत्वेन संकल्प्य गृहीतः । तन्निष्क्रयार्थं मया दीयमानां मत्कन्यामुत्तरां स्वीकुरुष्वेति भावः ॥

इत्थमुत्तराप्रतिग्रहमर्थयमानस्य विराटस्य मनस्युत्तराचारित्रदूषकत्वशङ्का तन्नित्यसंनिकृष्टमर्जुनं प्रति नूनमुद्भिन्ना । कथमन्यथा विसदृशवयसे बहुदाराय तस्मै बालां तामात्मनः प्रियदुहितरमयाचितां दातुं स व्यवस्येदिति मन्यमानो युधिष्ठिरो विराटवचनसूचितेन भ्रातुः कलङ्केन विमनायमान आह—एतदित्यादि । एतत् शिरः, अर्थात् पाण्डवानाम् । अवनतं नम्रं जातम् । चारित्रशुद्धिप्रयुक्तं पाण्डवानामुच्चैश्शिरस्त्वमिदानीमर्जुनचारित्रभ्रंशसूचनेनानेन व्यपगतमिति भावः । अस्य वाक्यस्य वक्ता युधिष्ठिरपदेनैव परामष्टुमुचितः, न तु भगवानिति, तत्स्वरूपस्य प्रकाशितत्वात् । 'उभौ' इति तु मातृकान्तरे वक्तृनिर्देश उपलभ्यते । तदा युधिष्ठिरभीमसेनाविति तदर्थो वक्तव्यः ॥

विराटाभिप्रायेण युधिष्ठिरव्याख्यातेन हृदयमर्मणि स्पृष्टश्चिन्तयति—कथमि-

इष्टमन्तःपुरं सर्वं मातृवत् पूजितं मया ।
उत्तरैषा त्वया दत्ता पुत्रार्थे प्रतिगृह्यते ॥ ७१ ॥

**युधिष्ठिरः** —— एतदुन्नतं शिरः ।

**राजा** ——

इदानीं युद्धशूराणां चारित्रेषु व्यवस्थितः ।
अन्तःपुरनिवासस्य सदृशीं कृतवान् क्रियाम् ॥ ७२ ॥

अद्यैव खलु गुणवन्नक्षत्रम् । अद्यैव विवाहोऽस्य प्रवर्तताम् ।

**युधिष्ठिरः** — भवतु भवतु । पितामहसकाशमुत्तरं प्रेषयामः ।

---

त्यादि । तुलयति स्वकन्याप्रतिग्रहणप्रार्थनभङ्ग्या परीक्षत इत्यर्थः। विराटशङ्कामपनुदति —— **भो** इत्यादि ।

**इष्टमिति** । मया, इष्टं प्रियं । सर्वम् अन्तःपुरं , न केवलं भवत्कन्यकैकैव, किन्तु त्वदन्तःपुरवासी निखिलोऽपि स्त्रीजन इत्यर्थः । मातृवत् मात्रा जनन्या तुल्यं । पूजितं सत्कृतं, न तु मनसापि दूषितम् । विराटशङ्कानिरसनक्षमां वाचमुक्त्वा क्रियामप्याह—त्वया, दत्ता। एषा उत्तरा। पुत्रार्थे प्रतिगृह्यते पुत्रस्याभिमन्योरर्थे मया स्वीक्रियते, न तु स्वार्थे। एवञ्चास्या मत्स्नुषीकरणाच्छीलं प्रत्यन्यथाशङ्कां दूरतो जहीहीति भावः ॥ ७१ ॥

विराटशङ्कापनयनपरितोषादाह — **एतदिति** । एतत् शिर उन्नतं पाण्डवानामुच्चैश्शिरस्त्वं प्रत्यापन्नमित्यर्थः । इह वक्ता भगवत्पदेनैव मातृकान्तरे निर्दिष्टः । उभाविति पाठस्य पूर्वोक्तस्यानुसरणे तु 'उभौ' इत्येष पठनीयमिहापि ॥

शङ्काव्यपगमसदृशमाह—**इदानीमित्यादि** । व्यवस्थितः लब्धस्थैर्यः ॥ ७२ ॥

**अद्यैवेत्यादि** । अस्य अभिमन्योः ॥

**भवत्विति** । भवतु भवतु यथा भवानिच्छति तथैव भवतु । आदराद् द्विर्वचनम् । पितामहसकाशं युद्धवशात् सन्निहितस्य भीष्मस्य समीपम्। उत्तरं प्रेषयामः, अर्थाद् विवाहमङ्गलवार्तां निवेदयितुम् ॥

**राजा** — यदभिरुचितं भव(न्ता?ते) । धर्मराजवृकोदरधनञ्जयाः ! इत इतो भवन्तः । अनेनैव प्रहर्षेणाभ्यन्तरं प्रविशामः ।

**सर्वे** — बाढम् ।

(निष्क्रान्ताः सर्वे ।)

**द्वितीयोऽङ्कः ।**

---

**यदि**त्यादि । धर्मराजादिसम्बोधनत्रयं व्यस्तं क्वचित् पठ्यते ॥

**बाढमिति** । बाढं यथा भवानाह, तथास्तु ॥

**निष्क्रान्ताः सर्वे** इति द्वितीयाङ्कपरिसमाप्तिः ॥

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति सूतः ।)

**सूतः**——भो भोः ! निवेद्यतां निवेद्यतां सर्वक्षत्राचार्यपुरोगाणां क्षत्रियाणाम् । एष हि,

अपास्य नारायणचक्रजं भयं चिरप्रनष्टान् परिभूय पाण्डवान् ।
धनुःसहायैः कुरुभिर्नरक्षितो हृतोऽभिमन्युः क्रियतां व्यपत्रपा ॥ १ ॥

इति ।

(ततः प्रविशतो भीष्मद्रोणौ ।)

---

### अथ तृतीयोऽङ्कः ।

द्वितीयाङ्के कौरवाणां यद् युद्धादपयानं या च स्वसाह्यागतसौभद्रहारणा, तदुभयं विराटपक्षे पाण्डवात्मप्रकाशनपुत्रसमागमाद्यभ्युदयपर्यवसायितया प्रतिपादितम् । तदेतत् परिभवद्वयमासाद्य कौरवाणां या प्रतिपत्तिः, सा पाण्डवप्रवृत्त्युपनयतद्राज्यार्धदानपर्यवसानास्मिन्नङ्के समुचितसंवादसंघटनसुन्दरं संकीर्त्यते ।

तत्र सौभद्रे परपक्ष्येण बलादपहृते भीष्मादिभ्यस्तद्वार्तां निवेदयितुकामस्य तत्सारथेरादौ प्रवेशः——**तत** इत्यादि । सूतः सारथिः । भट इति ग्रन्थान्तरे पाठः ॥

**भो भो** इत्यादि । सर्वक्षत्राचार्यपुरोगाणां सर्वक्षत्राचार्यो द्रोणः पुरोगो मुख्यो येषां तेषां तथाभूतानाम् । एष हीति श्लोकान्वयि ।

निवेदनीयवस्तुप्रकारमाह——**अपास्येति** । धनुस्सहायैः धनुः चापः सहायः साह्यकारी येषां तैस्तथाभूतैः । कुरुभिः कौरवैः भीष्मादिभिः । नरक्षितः अरक्षितः रक्षितुमपारित इत्यर्थः । अभिमन्युः, नारायणचक्रजं श्रीकृष्णसुदर्शनजन्यं । भयम्, अपास्य विहाय । चिरप्रनष्टान् चिरकालाज्ञातकथान् । पाण्डवान्, अस्य स्थाने 'बान्धवान्' इति ग्रन्थान्तरपाठः । तस्याप्ययमेवार्थः । परिभूय अगणयित्वा । हृतः अपनीतः । अर्थात् केनापि कृष्णपाण्डवनिर्भयेनानादृतकौरवसान्निध्येन परपक्ष्येण । व्यपत्रपा लज्जा । क्रियताम् अनुभूयताम् । अर्थात् कुरुभिः, यैर्मिषद्भिरेव धनुष्पाणिभिरयमभिमन्युहरणपराभव आसादितः । इह नरक्षित इति नञर्थस्य नशब्दस्य सुप्सुपेति समासः ॥ १ ॥

उक्तसूतवाक्यश्रवणोद्वेजितयोर्भीष्मद्रोणयोः प्रवेशमाह——**तत** इत्यादि ॥

द्रोणः — सूत ! कथय कथय ।

रणपटुरपनीतः केन मे शिष्यपुत्रः
क इह मम शरैस्तैर्दैवतैर्योद्धुकामः ।
कथय पुरुषसारं यावदस्त्रं बलं वा
बलवत इव दूतांस्तत्र सम्प्रेषयामि ॥ २ ॥

भीष्मः — सूत ! कथय कथय ।

---

सूतेत्यादि ।

रणेति । रणपटुः युद्धदक्षः । मे, शिष्यपुत्रः अभिमन्युः । केन, अपनीतः । इह विराटभूमौ । दैवतैः देवतासम्बन्धिभिः दिव्यैरित्यर्थः । मम, शरैः, सह, योद्धुकामः योद्धुं काम इच्छा यस्य स तथाभूतः । कः अभिमन्युहर्ता स को नाम । पुरुषसारं पुरुषश्रेष्ठम् अभिमन्युहर्तारम् । यावत् सकलम् । अस्त्रं, बलं वा बलं च । अर्थादभिमन्युहर्तृगतं । कथय मह्यं निवेदय । निवेदिते किं करिष्यसीति चेदाह —बलवत इव सारयुक्तानिव । इवशब्दो वाक्यालङ्कारे । दूतान् वार्ताहरान् । तत्र अभिमन्युहर्तृदेशे । सम्प्रेषयामि युद्धाह्वानार्थं प्रहेष्यामि । उपस्थितमहापरिभवासहिष्णुना द्रोणेन परिभवितृनिग्रहायात्मनः परिभवितृदेशं प्रति सद्योऽभियाने वक्तव्ये दूतसम्प्रेषणवचनमिदमत्यन्तमसमञ्जसं, सर्वव्यवहारौचित्यसर्वस्ववेदिनो महाकवेरननुरूपं च । तेन 'बलवत इव दूतान्' इति मातृकाद्वयेऽप्यपपाठो लेखकप्रमादागत एव । 'बलवत इषुदूतान्' इत्येव तु मूलपाठं मन्यामहे । तदायमर्थः—बलवतः दिव्यशक्तियुक्तान् इषुदूतान् इषून् बाणानेव दूतान् । तत्र अभिमन्युहर्तरि पुरुषे विप्रकृष्टदेशस्थे । सम्प्रेषयामि, अर्थाद् इहस्थ एवाहम् । अयमभिप्रायः—इषव एव मयेदानीं प्रेष्यमाणा अपराधिनं त्वरितमुपगम्य निघ्नन्तस्तमिहानेष्यन्ति, "हृतमभिमन्युं क्षणान्मह्यं प्रत्यर्प्य प्रह्वो मां प्रसादय" इत्येवंरूपमत्सन्देशबोधनरूपं दूतसमुदाचारं चाचरिष्यन्ति न तु तदर्थं दूतपुरुषाः पृथक् प्रेषयिष्यन्ते क्रियाविलम्बप्रसङ्गादिति । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इति मेदिनी ॥ २ ॥

भीष्मः पृच्छति — सूतेत्यादि ।

भग्नेति । भग्नापयानेषु भग्नानां युद्धपराजितानाम् अपयानेषु पलायनेषु विषये । अनभिज्ञदोषः अनभिज्ञ इत्येवंरूपो दोषो यस्य सः, निर्देशे भावप्राधान्याद अनभिज्ञत्वम् अनिपुणत्वं दोषो यस्य स तथाभूतो वा । भग्ना-

भग्नापयानेष्वनभिज्ञदोषस्तारुण्यभावेन विलम्बमानः ।
केनैष हस्तिग्रहणोद्यतेन यूथे प्रयाते कलभो गृहीतः ॥ ३ ॥

(ततः प्रविशति दुर्योधनः कर्णः शकुनिश्च ।)

**दुर्योधनः** — सूत ! कथय कथय । केनापनीतोऽभिमन्युः । अहमेवैनं मोक्षयामि । कुतः,

मम हि पितृभिरस्य प्रस्तुतो ज्ञातिभेद-
स्तदिह मयि तु दोषो वक्तृभिः पातनीयः ।
अथच मम स पुत्रः पाण्डवानां तु पश्चात्
सति च कुलविरोधे नापराध्यन्ति बालाः ॥ ४ ॥

---

पयानानभिज्ञत्वं हि गुणोऽपि ग्रहणानर्थप्रापकत्वादिह दोष इत्यभिमन्यते । तारुण्यभावेन यौवनस्वभावेन यौवनदर्पेण वा । विलम्बमानः अपयातुमत्वरमाणः एषः कलभः अयं गजयुवा । हस्तिग्रहणोद्यतेन महागजग्रहणोद्युक्तेन । केन, यूथे गजबृन्दे । अपयाते पलायिते सति । गृहीतः । अत्र कौरवग्रहणोद्यतेन केन शूरेण कौरवबृन्दे पलायिते पलायनानभिज्ञतया मन्दचारी सौभद्रो गृहीत इत्येवंरूपस्य प्रस्तुतवृत्तान्तस्य तत्सरूपेणाप्रस्तुतेन हस्तिग्राहिवृत्तान्तेन द्योतनादप्रस्तुतप्रशंसालङ्कारः । एष इत्येतत्पदेन सौभद्रपरामर्शे तु तस्मिन् कलभत्वरूपणात् सामर्थ्यगम्ये चोपमेयभूते कौरवबृन्दे यूथत्वरूपणाद् रूपकालङ्कारो बोद्धव्यः । 'यूथं तिर्यक्समूहेऽस्त्री' इति मेदिनी ॥ ३ ॥

अथ सूतघोषणां श्रुतवतो दुर्योधनस्य कर्णशकुनिसहितस्य प्रवेशः—तत इत्यादि ॥

सूतेत्यादि ।

अभिमन्युमोक्षणस्यात्मकरणीयत्वे हेतूनाह — ममेति । हि यस्मात् । मम, अस्य अभिमन्योः । पितृभिः सह, ज्ञातिभेदः दायादवैरं । प्रस्तुतः प्रक्रान्तः अस्ति । तत् तस्मात् । वक्तृभिः विद्वद्भिर्दूषकैर्वा । इह अभिमन्युग्रहणविषये । दोषः स्वजनोऽपि दुर्योधनः शत्रुगृहीतमभिमन्युं तत्पितृवैरादुपेक्षितवानित्येवंरूपोऽपवादः । मयि तु मय्येव । तुशब्दोऽवधारणे । अथवा तुशब्दो विशेषे मयि विशेषेणेत्यर्थः । भीष्मादिपुत्सर्गत इत्याशयः । 'मम च' इति पाठे तु ममैवेत्यर्थः । पातनीयः स्थापनीयः । एतेन स्वजनत्वनिमित्तमपवादभयमेको हेतुरुक्तः । बालवात्स-

**कर्णः**— अतिस्निग्धमनुरूपं चाभिहितं भवता । गान्धारीमातः !

मा तावत् स्वजनभयात् तु बालभावाद्
व्यापन्नः समरमुखे तव प्रियार्थम् ।
अस्माभिर्न च परिरक्षितोऽभिमन्यु-
र्गृह्यन्तां धनुरपनीय वल्कलानि ॥ ५ ॥

---

ल्यमपरं हेतुमाह—अथच किञ्च । सः अभिमन्युः । मम, पुत्रः वात्सल्यभूमित्वाद् ज्ञातिसम्बन्धाच्च पुत्राभिमानविषयः । पाण्डवानां तु, पश्चात्, पुत्रः, प्रथमं स ममैव पुत्रः, पश्चादेव पाण्डवान् प्रति स पुत्र इति स्नेहातिशयनिमित्ता मम मानसी भावनेत्याभिप्रायः । तत्र चिररूढस्तत्पितृविरोधस्तद्विषयं स्नेहं कुतो नापकर्षयतीत्यत्राह—कुलविरोधे, सति च विद्यमानेऽपि । बालाः, नापराध्यन्ति द्वेषार्हा न भवन्ति । अतो बालेऽभिमन्यौ मम स्नेहस्तदवस्थ एवेति भावः ॥ ४ ॥

**अतिस्निग्धमित्यादि** । इह यद्यपीति शेषः । वक्ष्यमाणश्लोके तुशब्दस्वारस्यात् । यद् भवताभिहितमभिमन्योरात्ममोक्षयितव्यत्वे हेतुद्वयं, तदतिस्निग्धमनुरूपं च यद्यपीति वाक्यार्थः ।

**मा तावदिति** । तु तथापि । स्वजनभयाद् स्वजनसम्बद्धाद् भयाद् स्वजनत्वनिमित्तात् प्रागुक्तादपवादभयाद्धेतोरित्यर्थः । मा तावत्, स मोक्षयितव्य इति शेषः । बालभावात् बालविषयो यो भावः स्नेहः, तस्माच्च पूर्वोक्ताद्धेतोरित्यर्थः । मा तावत्, स मोक्षयितव्य इति शेषः । इदं द्वयं तस्य मोक्षयितव्यत्वे न मुख्यो हेतुरिति भावः । कस्तर्हि मुख्य इति चेत्, तत्राह—अभिमन्युः, समरमुखे समरस्य युद्धस्य मुखे महारथाधिष्ठातव्ये प्रधानभागे । स्थित्वेति शेषः । तव प्रियार्थं विपक्षजयलक्षणप्रियसम्पादनार्थं । न तु स्वार्थं । व्यापन्नः ग्रहणविपत्तिं प्राप्तः । तदिदं त्वदर्थव्यापन्नत्वमभिमन्योस्त्वन्मोक्षयितव्यत्वे मुख्यहेतुरेक इति भावः । अपरमाह — अभिमन्युः, अस्माभिः अबालैः शूरैस्तद्रक्षणाधिकृतैरपीत्यर्थः । न च परिरक्षितः शत्रुगृह्यमाणो न पालितः । इदमतिव्रीडाकरमस्माकं परिभवस्थानमिति वक्तुं व्रीडाकार्यमाह — अस्माभिः अवश्यपरिरक्ष्यमपरिरक्षितवद्भिरित्यर्थः । धनुः निष्फलं चापम् । अपनीय परित्यज्य । वल्कलानि चीराणि वसनार्थानि । गृह्यन्तां वल्कलधारणेन वनेषु तपश्चर्यैवास्माकमुचिता, न तु धानुष्कवृत्त्या राज्येषु स्थितिरित्यर्थः । स एष परिभवस्तन्मोक्षणेन किञ्चित् कृतप्रतीकारो भवतीति सोऽप्यभिमन्योस्त्वन्मोक्षयितव्यत्वे मुख्यो हेतुरिति तात्पर्यम् ॥ ५ ॥

**शकुनिः**—बहुनाथः खलु सौभद्रः। मुक्त एवेति सम्प्रधार्यताम्। कुतः,

मुञ्चेदर्जुनपुत्र इत्यवगतो राजा विराटः स्वयं
स्मृत्वा चाद्य रणाजिरादवजितं मुञ्चेत् स दामोदरम्।
क्रोधोद्धूतहलात् प्रलम्बमथनाद् भीतेन मुच्येत वा
भीमस्त्वेनमिहानयेद् बलमहान् हत्वा रिपूनूर्जितान्॥ ६॥

**द्रोणः**—सूत! कथय कथय। कथमिदानीं गृहीतः।

पर्यस्तोऽस्य रथो हया नु चपलाश्चक्राक्षमा मेदिनी
तूणी क्षीणशरे त्वमस्य विगुणो ज्याच्छेदवन्ध्यं धनुः।

---

**बह्वित्यादि**। बहुनाथः बहवो नाथाः योगक्षेमचिन्तकाः यस्य स तथाभूतः। नाथाश्च रामकृष्णभीमार्जुनाः श्लोके वक्ष्यन्ते। सम्प्रधार्यतां निश्चीयताम्।

मोचनहेतून् सम्भावयति—**मुञ्चेदिति**। अर्जुनपुत्रः अयमर्जुनस्य सूनुः। इति एवम्। अवगतः अवगतिः ज्ञानं, तद्वान्, विराटो, राजा, अद्य, रणाजिराद् युद्धाङ्गणात्। अवजितम् अभिभूय गृहीतम्। अर्थादभिमन्युम्। 'अपगतम्' इति ग्रन्थान्तरे पाठः। स्वयं मुञ्चेत्। सः विराटः। दामोदरं कृष्णम् अभिमन्युमातुलं। स्मृत्वा च, मुञ्चेत्। अर्थात् तम्। अथवा, क्रोधोद्धूतहलात् कोपोत्कम्पितसीरात्। प्रलम्बमथनात् प्रलम्बासुरध्वंसिनः कृष्णभ्रातुर्बलभद्रात्। भीतेन अर्थाद् विराटेन मुच्येत, अर्थाद् अभिमन्युः। बलमहान् बलविषये महान् महाबल इत्यर्थः। भीमस्तु, ऊर्जितान् बलवतः रिपून् अभिमन्युग्राहिणः। हत्वा, एनम् अभिमन्युम्। इह, आनयेत्। अतो नास्माभिरत्र विमनायितव्यं किञ्चित् प्रयतितव्यं वेत्यभिप्रायः॥ ६॥

**सूतेत्यादि**। कथं गृहीतः कीदृशमभिमन्यौ छिद्रमासाद्य स शत्रुणा हृत इत्यर्थः।

सम्भावितानि छिद्राणि पृच्छति—**पर्यस्त इति**। अस्य अभिमन्योः। रथः, पर्यस्तो नु पतितः किम्, अथवा हतः किम्। हयाः रथाश्वाः। चपलाः अविधेयाः, जाताः किम्। मेदिनी रथसञ्चारभूमिः। चक्राक्षमा नु पङ्कश्वभ्रादियोगाच्चक्रपरिवर्तनासहा जाता किम्। तूणी निषङ्गौ क्षीणशरे नु निश्शेषव्ययितबाणे

एता दैवकृता भवन्ति रथिनां युद्धाश्रया व्यापदो
बाणैरप्यवकृष्यते खलु परैः स्वाधीनशिक्षस्तु सः ॥ ७ ॥

**सूतः** — आयुष्मन् ! पुरुषमयो धनुर्वेदः । किमायुष्मता न ज्ञायते ।

न चापि दोषा भवताभिभाषिताः स चापि बाणौघमयो महारथः ।
अलातचक्रप्रतिमस्तु मे रथो गृहीत एवापतता पदातिना ॥ ८ ॥

---

जाते किम् । त्वम् । अस्य रथस्य । विगुणो नु सञ्चारणप्रमादवशादननुगुणो जातः किम् । धनुः, ज्याच्छेदवन्ध्यं नु ज्याच्छेदेन मौर्वीच्छेदेन हेतुना वन्ध्यं निष्फलं जातं किम् । रथिनां, समर्थासमर्थविभागव्यतिरेकेण रथिसामान्यस्येत्यर्थः । युद्धाश्रयाः युद्धसम्बद्धाः । एताः व्यापदः रथपर्यासादिरूपाणि निग्रहस्थानानि । दैवकृताः, भवन्ति । शत्रुबाणसामर्थ्यप्रयुक्तोऽपि निग्रहप्रकारोऽस्ति; सोऽभिमन्युं प्रत्यसम्भाव्य इत्यभिप्रायेणाह—परैः शत्रुभिः । बाणैरपि करणभूतैः । अपिशब्दः पूर्वोक्तनिग्रहस्थानसमुच्चयार्थः । अवकृष्यते खलु न्यक्कृत्य गृह्यत एव । अर्थाद् बाणव्यापारापदुरुक्तव्यापद्रहितोऽपि रथी । तु किन्तु । सः अभिमन्युः । स्वाधीनशिक्षः स्वाधीना यथाकामकार्यकरणक्षमा शिक्षा धनुरभ्यासो यस्य स तथाभूतः । भवति । अतः शत्रुबाणसामर्थ्यं तन्निग्रहे न क्रमत इति भावः । चतुर्थपादस्यान्या व्याख्या— तु किन्तु । स्वाधीनशिक्षः, सः, परैः शत्रुभिः । बाणैरपि, अपिशब्देन अवकर्षणासमर्थत्वं बाणानां द्योत्यते । अवकृष्यते खलु अवजित्य गृह्यते किं, नाहमवकर्षणं संभावयामीत्यर्थः । खलुशब्दो जिज्ञासायाम् । 'खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने' इति मेदिनी ॥ ७ ॥

**आयुष्मन्नित्यादि** । पुरुषमयः पुरुषमूर्तिः । किं न ज्ञायते ज्ञायत एव ।

**न चेत्यादि** । भवता, अभिभाषिताः, दोषा अपि रथपर्यासादयोऽपि । न च नैव सम्भूताः । महारथः, स चापि अभिमन्युरपि । बाणौघमयः बाणबृन्दप्रचुरः बाणबृन्दवर्षी स्थित इत्यर्थः । तु तथापि । अलातचक्रप्रतिमः अलातचक्रस्य उल्मुकमण्डलस्य प्रतिमा अनुकृतिर्यस्य स तथाभूतः । बाणाग्निज्वालोद्गारदुरासदत्वान्मण्डलभ्रमिविधायित्वाच्च रथस्यालातचक्रसाम्यम् । मे रथः, आपतता तत्कालमागच्छता । पदातिना पादचारिणा केनापीत्यर्थः । गृहीत एव न पुनरगृहीतः । अग्रहणे तस्य न्याय्ये ग्रहणं तेन साधितमेवेत्यहो पदातेर्बलवैभवमिति भावः ॥ ८ ॥

**सर्वे** — कथं पदातिनेति ।

**द्रोणः** — अथ कीदृशः स पदातिः ।

**सूतः** — किमभिधास्यामि रूपं वा पराक्रमं वा ।

**भीष्मः** — रूपेण स्त्रियः कथ्यन्ते । पराक्रमेण तु पुरुषाः । तत् पराक्रमोऽस्याभिधीयताम् ।

**सूतः** — आयुष्मन् ! ।

**दुर्योधनः** —

किमर्थं स्तूयते कोऽपि भवता गर्वितार्क्षरैः ।
कथ्यतां नास्ति मे त्रासो यद्येष पवनो जवे ॥ ९ ॥

**सूतः** — श्रोतुमर्हति महाराजः । तेन खलु,

लङ्घयित्वा जवेनाश्वान् न्यस्तश्चापस्करे करः ।
प्रसारितहयग्रीवो निष्कम्पश्च रथः स्थितः ॥ १० ॥

---

**कथमित्यादि** । पदातिनेति, कथं, घटत इति शेषः । न हि तथाविधरथग्रहणं कस्यचित् पदातेः सुकरमिति भावः ॥

**अथेत्यादि** ॥

**किमित्यादि** । किमभिधास्यामि किं वर्णयिष्यामि, वर्णनागोचरे हि वर्तते तस्य रूपं पराक्रमश्चेत्यभिप्रायः ॥

**रूपेणेत्यादि** ॥

**आयुष्मन्निति** ।

पदातिमतिस्तोतुमिव सूतस्य संरम्भमाकारैरनुमाय तमसहमान आह—**किमर्थमित्यादि** । स्तूयते स्तोष्यते । वर्तमानसामीप्ये लट् । गर्वितार्क्षरैः प्रौढैर्वाक्यैरित्यर्थः । एषः पदातिः । जवे वेगे विषये । पवनो यदि वायुतुल्यो यदि भवेत् । तदापीति शेषः । मे त्रासः भयं । नास्ति ॥ ९ ॥

**श्रोतुमित्यादि** । तेन खल्विति श्लोकान्वयि ।

**लङ्घयित्वेति** । तेन पदातिना खलु । जवेन, अश्वान् । लङ्घयित्वा अतिक्रम्य । अपस्करे रथावयवे । करः हस्तः एकः । न्यस्तश्च निवेशितश्च । प्रसारितहयग्रीवः प्रसारिताः स्तब्धरथाकर्षणातियत्नवशाद् द्राघिताः हयग्रीवाः अश्वकण्ठाः

**भीष्मः** — तेन हि न्यस्यन्तामायुधानि ।

**सर्वे** — किमर्थम् ।

**भीष्मः** —

हृतप्रवेगो यदि बाहुना रथो वृकोदरस्याङ्कगतः स चिन्त्यताम् ।
पुरा हि तेन द्रुपदात्मजां हरन् पदातिनैवावजितो जयद्रथः ॥ ११ ॥

**द्रोणः** — सम्यगाह गाङ्गेयः । बाल्योपदेशात् प्रभृत्यहं तस्य जवमवगच्छामि । इष्वस्त्रशालायां हि,

कर्णायते तेन शरे विमुक्ते विकम्पितं तस्य शिरो मयोक्तम् ।
गत्वा तदा तेन च बाणतुल्यमप्राप्तलक्षः स शरो गृहीतः ॥ १२ ॥

---

यस्य स तथाभूतः । रथः निष्कम्पः निश्चलः । स्थितश्च । रथावयवे तदेकहस्तन्यासमात्रेण रथः स्तब्धो जात इति भावः । अत्र करन्यास-रथनिष्कम्पस्थित्योः कारणकार्ययोस्तुल्यकालसम्बन्धश्चशब्दाभ्यां द्योत्यते ॥ १० ॥

**तेन हीत्यादि** । तेन हि तर्हि । न्यस्यन्तां निर्व्यापारं स्थाप्यन्ताम् । मास्त्वभिमन्युमोचनार्थं उद्यम इति भावः ।

**किमर्थमिति** । केन कारणेनेत्यर्थः ॥

हृतेति । रथः, बाहुना एकेन भुजेन । हृतप्रवेगो यदि निरुद्धवेगप्रकर्षश्चेत् । तर्हीति गम्यम् । सः अभिमन्युः । वृकोदरस्य भीमसेनस्य । अङ्कगतः उत्सङ्गगतः । एतेनाकुतोभयस्थानगतत्वमुक्तम् । चिन्त्यतां बुध्यतां भवद्भिः । भीमसेनस्यैवेदं कर्म सम्भाव्यते, यदतिवेगगामिनो रथस्य बाहुनैकेन स्तम्भनं नाम । अतस्तेनैव रथं निरुध्याभिमन्युर्गृहीत इत्यनुमोयतामिति भावः । ईदृशमशक्यकर्मकरणं भीमे भूयो-दृष्टमित्याह—हिशब्दो दृष्टान्ते । पुरा वनवासकाले द्रुपदात्मजां द्रौपदीं । हरन् रथमारोप्य नयन् । जयद्रथः, तेन वृकोदरेण । पदातिनैव सता पादचारिणैव सता, न तु रथिना । अवजितः रथाद् गृहीतः । एतेन पाण्डवप्रवृत्त्युपलम्भस्य सिद्धतां सूचयति ॥ ११ ॥

तदनुगुणमाह—सम्यगित्यादि । इष्वस्त्रशालायाम् आयुधाभ्यासशालायाम् ।

अतिवेगस्य भीमे दृष्टचरत्वमाह—कर्णेति । तेन भीमेन । कर्णायते कर्णपर्यन्तदीर्घे ज्यया सहाकर्णाकृष्टे इत्यर्थः । मध्यमपदलोपी समासः । शरे, विमुक्ते

**शकुनिः**—अहो हास्यमभिधानम् । भोः ! पृच्छामि तावद् भवन्तम् ।

नास्त्यन्यो बलवाँल्लोके सर्वमिष्टेषु कथ्यते ।
जगद्व्याप्तान् भवन्तः किं सर्वे पश्यन्ति पाण्डवान् ॥ १३ ॥

**भीष्मः**—गान्धारराज ! सर्वमनुमानात् कथ्यते ।

वयं व्यपाश्रित्य रणं प्रयामः शस्त्राणि चापानि रथाधिरूढाः ।
द्वावेव दोर्भ्यां समरे प्रयातौ हलायुधश्चैव वृकोदरश्च ॥ १४ ॥

---

सति । मया, तस्य भीमस्य । शिरः, विकम्पितं विचलितम् । उक्तं, शरमोचनेऽनर्हः शिरःकम्पदोषो मयोद्भावित इत्यर्थः । तदा स्वविमुक्तबाणगमनकाले । तेन च भीमेन च । बाणतुल्यं गत्वा मुक्तबाणसदृशं गत्वा मुक्तेन बाणेन यावदन्तरं लङ्घितं तावद् गत्वेत्यर्थः । सः, शरः, अप्राप्तलक्षः सन् अनासादितलक्ष्यदेशः सन् । गृहीतः, उद्दिष्टं लक्ष्यदेशं प्रति गच्छन् स्वबाणः लक्ष्यदेशप्राप्तिप्राक्काल एव तेन पश्चादनुधाव्य मध्येमार्गं गृहीत इत्यर्थः । एतेन बाणातिशायिवेगत्वं तस्योक्तम् ॥ १२ ॥

पाण्डवप्रवृत्त्युपलम्भं भीष्मद्रोणाभ्यां सूचितमसहमान आह—**अहो** इत्यादि । हास्यं परिहसनीयम् ।

**नास्ती**त्यादि । नास्तीति प्रश्नकाकुः । सर्वम् अर्थाद् गुणजातम् । इष्टेषु प्रियेषु जनेषु । जगद्व्याप्तान् जगत् लोकं व्याप्तान् जगद्व्यापकानित्यर्थः । कर्तरि क्तः । जगद् व्याप्तं यैस्ते जगद्व्याप्ताः, तानिति वा । आहिताग्न्यादित्वात् व्याप्तशब्दस्य परनिपातः । एतेन पाण्डवतुल्यः पाण्डवातिशायी वा कश्चिदन्य एवाभिमन्युग्रहणक्षमः संभाव्यते, न तु भवदुक्तो भीम इति सूचितम् ॥ १३ ॥

**गान्धारे**त्यादि । अनुमानाद् ऊहकारणगुणसद्भावात् । कथ्यते, अतो मा खलु ते भीमस्य गुणेष्वसूयेति भावः ।

भीमस्यैव बलगुणो लोकोत्तरोऽस्तीत्याह—**वयमि**त्यादि । व्यपाश्रित्य अवलम्ब्य ॥ १४ ॥

**शकुनिः**—

एकेनैव वयं भग्नाः सहसा साहसप्रियाः ।
उत्तरं च तमप्येके कथयिष्यन्ति फल्गुनम् ॥ १५ ॥

**द्रोणः**—भो गान्धारराज ! अत्रापि तावद् भवतः सन्देहः ।

किमुत्तरेणापि रणे विकृष्यते निसृष्टशुष्काशनिगर्जितं धनुः ।
किमुत्तरस्यापि शरैर्हृतातपः कृतो मुहूर्तास्तमितो दिवाकरः ॥ १६ ॥

**भीष्मः**—गान्धारीमातः! विस्पष्टं खलु कथ्यते । ननु जानीते भवान् ।

बाणपुङ्खाक्षरैर्वाक्यैर्ज्याजिह्वापरिवर्तिभिः ।
विकृष्टं खलु पार्थेन न च श्रोत्रं प्रयच्छति ॥ १७ ॥

---

यद्येवम् अन्यादृशबलवेगदर्शनादभिमन्युहर्ता भीम एवेत्युच्यते, तर्हि सकलास्मद्भङ्गेन सुव्यक्तामहायशौर्य उत्तरोऽप्यर्जुन इति वक्तव्यः प्रसज्येतेत्याह—**एकेने**त्यादि । एकेनैव असहायेनैव केनचिदित्यर्थः । तम् अस्मद्भङ्गकारिणम् । उत्तरमपि च । फल्गुनं कथयिष्यन्ति अर्जुन इति वक्ष्यन्ति । अतो यथार्जुनवदसहायशूरोऽन्य एवोत्तरो नाम रणमुखे साक्षाद् दृष्टः, तथा भीमवन्महाबलवेगोऽन्य एव कश्चिदभिमन्युहर्ता स्यादिति भावः ॥ १५ ॥

शकुन्यापादिते सर्वभङ्गकर्तुः फल्गुनत्वे द्रोण इष्टापत्तिं कृत्वाह—**भो इत्या**दि । अत्रापि अस्मद्भङ्गकारिणः फल्गुनत्वेऽपि ॥

अर्जुनैकगोचरमुत्तरव्यावृत्तं कर्मद्वयमाह—**किमित्या**दि । किं विकृष्यते नैव विकृष्यत इत्यर्थः । अपिशब्देन तथाविधधनुर्विकर्षणस्योत्तरगतत्वेन सम्भावनमुपहसनीयमिति द्योत्यते । एवमुत्तरार्धेऽप्यपिशब्दस्वरसो बोद्धव्यः । निसृष्टशुष्काशनिगर्जितं निसृष्टं जनितं शुष्काशनिगर्जितं शुष्ककुलिशध्वनिः येन तत् तथाभूतं । हृतातपः अवच्छन्नालोकः । अत एव मुहूर्तास्तमितः मुहूर्तकालमस्तमितत्वप्रतीतिविषयः । एवञ्च यथोक्तधनुर्विकर्षणं बाणैः सूर्यास्तमितत्वकरणं चार्जुनस्यैव कर्म भवितुमर्हतीति भीमप्रवृत्तिवदर्जुनस्यापि प्रवृत्तिरुपनीतप्रायैवेति भावः ॥ १६ ॥

**गान्धारी**ति । विस्पष्टं खलु स्फुटमेव । कथ्यते प्रतिपाद्यते, अर्थात् फल्गुन इत्येतत् । नन्वित्यादि श्लोकान्वयि ।

**बाणे**ति । हे गान्धारीमातः ! । बाणपुङ्खाक्षरैः बाणपुङ्खेषु बाणमूलेषु अक्षराणि येषां तैस्तथाभूतैः । बाणपुङ्खेषु समुदाचारलिखितानि यानि नामाक्षराणि,

(प्रविश्य)

**सूतः** — जयत्वायुष्मान् । शान्तिकर्मानुष्ठीयताम् ।

**भीष्मः** — किमर्थम् ।

**सूतः** —

उचितं ते पुरा कर्तुं ध्वजे बाणप्रधर्षिते ।
अयं हि बाणः कस्यापि पुङ्खे नामाभिधीयते ॥ १८ ॥

**भीष्मः** — आनय ।

(सूत उपनयति ।)

**भीष्मः** — (गृहीत्वा निरीक्ष्य) वत्स! गान्धारराज! जराशिथिलं मे चक्षुः । वाच्यतामयं शरः ।

---

तेष्वेव वाक्यघटकाक्षरत्वमारोप्येयमुक्तिः । अथ वाक्यानां जिह्वापरिवर्तित्वं प्रसिद्धं, तदप्याह—ज्याजिह्वापरिवर्तिभिः ज्यायां मौर्व्यामेव जिह्वायां परिवर्तितुं लुठितुं शीलमेषामिति तैस्तथाभूतैः । वाक्यैः वाक्यत्वेनाध्यवसितैर्धनुर्ध्वनिभिः करणभूतैः । भवान्, ननु जानीते, अर्जुन इति किं न विदितवानित्यर्थः । उक्तस्य दार्ढ्यार्थमाह—पार्थेन खलु अर्जुनेनैव । विकृष्टम् अर्थाद् धनुः । श्रोत्रं श्रवणावधानं । न च प्रयच्छति नैव दत्तवान् किं धनुर्ध्वनिं प्रति । अर्थाद् भवान् । प्रयच्छतीति काकुः । इह सर्वत्र वर्तमानसामीप्यविवक्षया भूते लट् ॥ १७ ॥

अथ भीष्मध्वजधर्षिणं कमपि बाणमादाय तत्सूतस्य प्रवेशः—जयत्वित्यादि । शान्तिकर्म अमङ्गलप्रशमार्थं कर्म ॥

**किमर्थमिति** ।

**उचितमिति** । ध्वजे, बाणप्रधर्षिते सति परशरविद्धे सति । पुरा पूर्वं । ते त्वया । कर्तुम्, उचितं युक्तम् अर्थाच्छान्तिकर्म । बाणः येन ध्वजः प्रधर्षितः स शर इत्यर्थः । अयं हि अयमेव मत्करस्थ इत्यर्थः । पुङ्खे बाणमूले । कस्यापि, नाम नामधेयम् । अभिधीयते, तदनुवाच्य पश्चाद् धर्षयितृप्रतीकारं सम्प्रधारयेत्यभिप्रायः ॥ १८ ॥

**आनयेति** । अर्थाद् बाणम् ॥

निरीक्षणेन विदितमपि नामधेयं विवदमानशकुनिमुखेनैव वाचयितुमिच्छन्नाह—वत्सेत्यादि । जराशिथिलं जरया वार्धकेन निमित्तेन शिथिलम् अपटु ॥

**वृद्धः** — कृतमातिथ्यमनेन जीवितप्रदानेन । तस्माद्गच्छामस्तावत् ।

**भीमसेनः** — गच्छतु भवान् सकुटुम्बः पुनर्दर्शनाय ।

**वृद्धः** — बाढम् । प्रथमः कल्पः ।

(निष्क्रान्तः सकलत्रपुत्रः केशवदासः ।)

**भीमसेनः** — हिडिम्बे ! इतस्तावत् । वत्स ! घटोत्कच ! इतस्तावत् । तत्रभवन्तं केशवदासमाश्रमपदद्वारमात्रमपि सम्भावयिष्यामः ।

यथा नदीनां प्रभवः समुद्रो यथाहुतीनां प्रभवो हुताशः ।
यथेन्द्रियाणां प्रभवं मनोऽपि तथा प्रभुर्नो भगवानुपेन्द्रः ॥ ५१ ॥

(निष्क्रान्ताः सर्वे ।)

---

मध्यमव्यायोगोऽवसितः ॥

---

श्रमः, अस्तीति शेषः । विश्रम्य मदीयातिथ्यस्वीकारादिना मार्गसञ्चारपरिखेदम् पनीयेत्यर्थः ॥ ५० ॥

कृतमित्यादि ॥

गच्छत्विति । भवान्, पुनर्दर्शनाय गच्छतु अस्मभ्यं पुनर्दर्शनं दातुं गच्छतु, पुनर्दर्शनदानं पुनरागमनसाध्यमिति पुनरागमनाय गच्छत्विति फलितोऽर्थः । 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी ॥

बाढमिति । बाढम् अङ्गीकृतम् अर्थाद् भवदर्थितं मम पुनरागमनम् । अङ्गीकारं द्रढयितुमाह — प्रथमः कल्पः स मुख्यो विधिः । पुनरागमनं मम मुख्यं कार्यमित्यर्थः ॥

विप्रस्य प्रस्थितस्यानुगमनसत्कारं चिकीर्षुराह — **हिडिम्बे** इत्यादि । आश्रमपदद्वारमात्रमपि सम्भावयिष्यामः आश्रमपदद्वारमात्रमवधीकृत्यापि सत्करिष्यामः, अर्थादनुगमनेन । अपिशब्देन सम्भावनस्याश्रमपदद्वारमात्रपर्यन्तताया अवरकल्पत्वं द्योतयति । आ आश्रमपदद्वारमात्राद् आश्रमपदद्वारमात्रमिति 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः ।

इत्थं व्यायोमार्थं परिसमाप्य 'प्रशस्तिः शुभशंसनम्' इत्युक्तलक्षणं निर्वह-

णसन्धिचरमाङ्गं प्रशस्तिमाह — यथेति । यथा समुद्रः, नदीनां, प्रभवः ईशिता उत्पत्तिलयहेतुत्वात् । यथा हुताशः अग्निः । आहुतीनां होमानां हुतद्रव्याणां वा । प्रभवः स्वामी भोक्तृत्वात् । यथापि अपिशब्द उपमासमुच्चये । मनः इन्द्रियाणां चक्षुरादीनां । प्रभव स्वामि, प्रेरकत्वात् । तथा, भगवान् भगः षाड्गुण्यम् 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥' इत्युक्तप्रकारम्, तद्वान् । उपेन्द्रः विष्णुः । नः अस्माकं । प्रभुः नाथः भवति । अतः सोऽस्मान परित्रायतामिति प्रार्थना गम्यते । प्रभवति ईष्टे इत्यर्थे पचाद्यचा प्रभवशब्दस्य वाच्यलिङ्गस्य सिद्धिः ॥ ५१ ॥

निष्क्रान्ताः सर्वे इति व्यायोगपरिसमाप्तिः ॥

---

ताम्रपर्ण्यमृताद्रपूततरुवाग्रहारगनशशा
वाञ्चिमूलकरामवर्मकुलशेखरक्षितिपरक्षितः ।
मध्यमाख्यमिदं महोर्जितगुणाकरं गणपतिः सुधी
र्भासनाटकमण्डले किमपि रूपकं विवृतवानिति ॥
वाग्देव्या वरिवस्यैव यदिदं मम जल्पनम् ।
भूयान्मत्प्रयेनतया नित्यं सुप्रसन्ना सरस्वती ॥

इति श्रीमदनन्तशयनवास्तव्यस्य ताम्रपर्णीतीरवर्तितरुवाग्रहारा भिजनस्य श्रीसीताम्बारामसुब्रह्मण्यार्यसूनोः

**गणपतिशास्त्रिणः कृतिषु**

**मध्यमव्यायोगव्याख्यानं**

सम्पूर्णम् ।

---

शुभं भूयात् ॥

# श्लोकानुक्रमणिका ।

## वृत्तलक्षणम् ।

'स्यादिन्द्रवज्रा यदि तौ जगौ गः ।' | अनयोर्मेलनादुप-
'उपेन्द्रवज्रा जतजास्ततो गौ ।' | जाति काचित ।
'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।'
'ननमयययुतेयं मालिनी भोगिलोकैः ।'
'जतौ तु वंशस्थमुदीरितं जरौ ।'
'उक्तं वसन्ततिलकं तभजा जगौ गः ।'
'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।'

---

## व्यायोगादिलक्षणम् ।

' ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ।
हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः ॥
अस्त्रीनिमित्तसंग्रामो जामदग्न्यजये यथा ।
एकाहचरितैकाङ्को व्यायोगो बहुभिर्नरैः ॥''
''यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥''
''आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥''
' आमन्त्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥''
''कुशीलवकुटुम्बस्य स्थलं नेपथ्यमुच्यते ।''
' सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत् तदामुखम् ॥
प्रस्तावना वा ''
''विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
नीतः सदस्यरस्यत्वमुत्साहो वीर उच्यते ॥''

---